सोत्तरा

# मध्यमाप्रश्नावली

[ तृतीयखण्डस्य ]

व्याकरणाचार्य-
पण्डित श्रीछविनाथ त्रिपाठिना
सम्पादिता ।

प्रकाशक—
चौखम्बा-संस्कृत-पुस्तकालय,
बनारस सिटी ।

द्वितीयावृत्तिः ] [ १९४०

## निज प्रकाशित मध्यमा परीक्षा पाठ्य-ग्रन्थ—



१ सिद्धान्तकौमुदी—( कारकान्त ) व्याकरणाचार्य पं० गोपालशास्त्री नेने ( प्रोफेसर ग० सं० कालेज काशी ) विरचित सरला टीका एवं सरल रूपलेखनप्रकार—फक्किका( पङ्क्ति )लेखनप्रकार—उदाहरण के अर्थ ( हिन्दी में ) सूत्रसूची, वार्त्तिकसूची, परिभाषासूची, गणसूची आदि परिशिष्ट से सुशोभित। नवीन संस्करण १।)

२ रघुवंशमहाकाव्य—मल्लिनाथी टीका तथा पं० श्रीकनकलालठक्कुर विरचित परीक्षोपयोगी अर्थप्रकाशिका टीका सहित १–३ सर्ग।=) १–५ सर्ग।≡)

३ रघुवंशमहाकाव्य—अत्युत्तम परीक्षोपयोगी सुधानाम्नीटीका तथा मल्लिनाथीटीका सहित। मल्लिनाथकृत संजीविनीटीका अन्वय-सुधाव्याख्या—कोश—समासादि—व्याकरण—वाच्यपरिवर्तन—तात्पर्यार्थ—हिन्दी-भाषार्थ—पौराणिककथायें—टिप्पणियां— 'क्षिप्तकथायें परीक्षोपयोगी प्रश्नपत्र सहित। १–५ सर्ग १।।) ६–१० सर्ग १।।) १–१० सर्ग २॥) २–३ सर्ग।≡)

४ रघुवंशमहाकाव्य—मल्लिनाथी टीका सहित। सम्पूर्ण १)

५ नागानन्दनाटक—परीक्षोपयोगी भावार्थदीपिका संस्कृतटीका—हिन्दीअनुवाद सहित १।)

६ बृहद् संस्कृतशिक्षावाटिका १–३ भाग—संस्कृत से हिन्दी तथा हिन्दी से संस्कृत अनुवाद के लिए अत्यन्त उपयुक्त ।।।)

७ विदुरनीति ३–८ अध्याय—अन्वय—समास—कोष—भावार्थ—भाषार्थ आदि सम्पूर्ण विषयों से युक्त 'तत्त्वार्थदर्शिनी' तथा 'सरलार्थबोधिनी' नामक परीक्षोपयोगी टीका के सहित। अद्वितीय संस्करण।=)

८ अमरकोश-'मणिप्रभा'-'अमरकौमुदी' नामक परीक्षोपयोगी भाषाटीका तथा टिप्पणी विस्तृत भूमिका विषयसूची व शब्दसूची सहित सम्पूर्ण २)

९ अमरकोश—द्वितीयकाण्ड—"मणिप्रभा"—तथा "अमरकौमुदी" नामक परीक्षोपयोगी भाषाटीका तथा टिप्पणी सहित। ।=)

१० अमरकोश—अनेकार्थध्वनिमञ्जरी—द्विरूपकोश—एकाक्षरकोश सहित मूल सम्पूर्ण गुटका ।) केवल द्वितीयकाण्ड मूल =)

११ मध्यकौमुदी—अत्युत्तम सरल परीक्षोपयोगी बृहद् टिप्पणी सहित १।)

१२ पञ्चतन्त्र—निषिद्ध अश्लील अंश वर्जित परीक्षोपयोगी विषम-स्थल बोधिनी विवृत्ति सहित। प्रथमतन्त्र ≡) द्वितीय =) तृतीय ≡) चतुर्थ =) पञ्चम =) सम्पूर्ण १–५ तन्त्र ।।)

॥ श्रीः ॥

व्याकरणमध्यमतृतीयखण्डप्रश्नोत्तरावल्याः

# प्रयोगाणामकारादिक्रमेणानुक्रमणिका ।

॥ इति ॥

---

प्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज आफिस,

बनारस सिटी ।

॥ श्रीगणेशाय नमः ॥

# सिद्धान्तकौमुद्याम्

## तृतीयखण्डे—प्रश्नाः

१८२५

१ पत्रम् ।

१—ह्यस्त्यम्, वैदिकी, वृजिकः, द्वैप्यम्, आनुग्रामिकः, सांवहित्रम् एते कथं सिद्ध्यन्ति ।

२—द्रुवयम्, नाविकः, सैन्याः, आवसथिकः, ऊधन्यः, राजभागीनः, शतिकम्, एषु के तद्धितप्रत्ययाः ।

३—तृतीयिकः, अर्घ्यः, पान्थः, ह्यस्त्यम्, स्तेयम्, सार्वचर्मीणः, पीलुकुणः, कर्मठः, एषु कानि तद्धितप्रत्ययविधायकानि ।

४—मणिवः, वातकी, कस्वः, आढ्यचरः, वायुकः, वेणुकः, द्रव्यम्, एषु के तद्धितप्रत्ययार्थाः ।

५—वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेष्विति सूत्रं सोदाहरणं व्याख्यायताम् ।

## १—प्रश्नोत्तराणि

उ०—ह्यस्त्यम्—ह्यो भवमित्यर्थे 'ह्यः' शब्दात् "ऐषमोह्यः श्वसोऽन्यतरस्याम्" इत्यनेन त्यप्प्रत्यये अनुबन्धलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सौ सोरमादेशे 'ह्यस्त्यम्' इति सिद्धम् ।

वैदिकी—वेद्यां जातादिरित्यर्थे वेदी शब्दात् "काश्यादिभ्यष्ठञ्ञिठौ" इति ठञि प्रत्यये ञित्वात् "तद्धितेष्वचामादेः" इत्यादिवृद्धौ ठस्येकादेशे "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति ठञन्तत्वान्ङीपि अनुबन्धलोपे "यस्येति च" इत्यनेनाकारलोपे "कृत्तद्धितसमासाश्च"

इत्यनेन प्रातिपदिकसंज्ञायाम् सौ विभक्तौ अनुबन्धलोपे "हल्ङ्याब्भ्योदीर्घात् सुतिस्यपृक्तं हल्" इत्यनेन लोपे कृते 'वैदिकी' इति सिध्यति।

वृजिकः—वृजौ देशविशेषे जातादिरित्यर्थे वृजिशब्दात् "मद्रवृज्योः कन्" इति कनि अनुबन्धलोपे प्रातिपदिकसंज्ञायां सौ रुत्वविसर्गे च कृते वृजिकः इति साधुः।

द्वैप्यम्–द्वीपे भवमित्यर्थे द्वीप्शब्दात् "द्वीपादनुसमुद्रं यञ्"इति यञि अनुबन्धलोपे ञित्वात् "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धौ "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात् सौ सोरमादेशे कृते द्वैप्यमिति सिद्धम्।

आनुग्रामिकः–अनुग्रामं भवमित्यर्थेऽनुग्रामशब्दात् "ग्रामात्पर्यनुपूर्वात्" इति ठञि अनुबन्धलोपे ठस्येकादेशे "किति च" इत्यनेनादिवृद्धौ "यस्येति च" इत्यकारलोपे प्रातिपदिककार्ये आनुग्रामिकः इति साधुः।

सांवहित्रम्–संवोढुः स्वमित्यर्थे तृजन्तात् संपूर्वाद्वहेः–"वहेस्तुरणिट् च" इति वार्तिकेनाणि इटि च कृते अनुबन्धलोपे "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धौ ऋकारस्य यणि रेफे प्रातिपदिकत्वात्सौ अमि पूर्वरूपे सांवहित्रमिति सिद्धम्। अत्र ढत्वादीनामसिद्धत्वात्पूर्वमिटि ततो निमित्ताभावान्न ढत्वादीति बोध्यम्।

## २–प्रश्नोत्तराणि

उ०–द्रुवयम्—द्रोर्विकारोऽवयवोवेत्यर्थे "मानेवयः" इति सूत्रेण वय प्रत्यये प्रातिपदिकत्वात्सौ सोरमादेशे द्रुवयमिति सिद्धम्। ननु सोमलताद्रव्यकयागेषु क्रतुशब्दो यज्ञशब्दश्च प्रसिद्धः। तत्रान्यतरस्यां ग्रहणं व्यर्थमिति चेत्। सत्यम्। उभयोपादानसामर्थ्यादिह क्रतुशब्देन सोमयागाः, यज्ञशब्देन च तदितरयागाः विवक्षिताः।

नाविकः— नावा तरतीत्यर्थे "नौद्व्यचष्ठन्" इति सूत्रेण ठनि अनुबन्धलोपे आदिवृद्धौ प्रातिपदिककार्ये नाविक इति साधुः।

सैन्याः—सेनायां समवेता इत्यर्थे "सेनाया वा" इति ण्यप्रत्यये अनुबन्धलोपे आदिवृद्धौ प्रातिपदिकार्ये सैन्या इति साधुः।

आवसथिकः—आवसथे वसतीत्यर्थे "आवसथात् ष्ठल्" इति ष्ठलि प्रत्यये अनुबन्धलोपे प्रातिपतिककार्ये आवसथिक इति साधुः।

ऊधन्यः—ऊधसे हितम् इत्यर्थे "ऊधसोनङ् च" इति गणसूत्रेण यत्प्रत्यये अनङादेशे च अनुबन्धलोपे प्रातिपदिककार्ये ऊधन्य इति साधुः ।

राजभोगीनः—राजभोगाय हितं इत्यर्थे "आत्मन्विश्वजनभोगोत्तरपदात्खः" इत्यनेन ख प्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति खस्येनादेशे प्रातिपदिककार्ये राजभोगीन इति सिद्ध्यति ।

शतिकम्—शतेन क्रीतमिति विग्रहे "शताच्चठन्यतावशते" इतिसूत्रेण ठन् प्रत्यये ठस्येकादेशे प्रातिपदिकत्वात्सौ सोरमादेशे 'शतिकम्' इति सिध्यति ।

## ३–प्रश्नोत्तराणि

उ०–तृतीयकः—'तृतीयो वृद्ध्यादिरस्मिन्दीयते इत्यर्थे "पूरणार्धाट्ठन्" इति ठन्प्रत्यये तृतीयक इति सिद्ध्यति ।

अर्घ्यः—अर्घार्थमुदकमित्यर्थे "पादार्घाभ्यां च" इति यत्प्रत्यये यस्येति-चेत्यकारलोपे अर्घ्यः इति साधुः ।

पान्थः—पन्थानं नित्यं गच्छतीत्यर्थे पथिन्शब्दात् "पन्थोणनित्यमिति" णप्रत्यये पथः पन्थादेशे आदिवृद्धौ च कृते पान्थ इति रूपम् ।

हस्त्यम्—हस्तेन दीयते कार्यं वेत्यर्थे हस्तशब्दात् "तेन यथाकथाच-दीयते" इति यति "यस्येति च" इत्यनेनाकारलोपे सोरमादेशे च कृते 'हस्त्यम्' इति सिद्धम् ।

स्तेयम्—इत्यत्र स्तेन शब्दात् "स्तेनाद्यन्नलोपश्च" इत्यनेन यत्प्रत्यये अनुबन्धलोपे सोरमादेशे 'स्तेयम्' इति सिद्धम् ।

सार्वचर्मीणः—अत्र सर्वश्चर्मणा कृत इत्यर्थे "सर्वचर्मणः कृतः खखञौ" इति खञ्प्रत्यये तस्येनादेशे आदिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे सार्वचर्मीण इति सिद्ध्यति ।

पीलुकुणः—पीलूनां पाक इति विग्रहे 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ" इति कुणप् प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात् सौ रुत्वविसर्गे च कृते पीलुकुणः इति सिद्ध्यति ।

कर्मठः—इत्यत्र कर्मणि घटत इत्यर्थे "कर्मणि घटोऽठच्" इत्यठच् प्रत्यये प्रातिपदिकत्वात्सौ रुत्वविसर्गे च कृते कर्मठ इति साधुः ।

## ४-प्रश्नोत्तराणि

उ०—**मणिवः**–इत्यत्र मत्वर्थस्तद्धितार्थः मणिशब्दात् व प्रत्यये मणिव इति सिद्ध्यति ।

**वातकी**—अत्रापि मत्वर्थस्तद्धितार्थः–'तत्रापि रोग एव विशेष्यः' प्रत्यय-श्चात्र इनिः ।

**कस्थः**—इत्यत्र "कंशंभ्यां बभयुस्तितुतयसः" इत्यनेन व प्रत्यये मत्वर्थश्च तदर्थः ।

**आढ्यचरः**—भूतपूर्वः आढ्यः आढ्यचर इति विग्रहे "भूतपूर्वे चरट्" इत्यनेन चरट् प्रत्ययः । सच स्वार्थे–भूतपूर्वत्वन्तु प्रकृतेरेव विशेषणम् । "गोष्ठा-त्खञ्" इत्यत्रैव नोक्तम् । विशेषविहितेन खञा चरटो बाधो माभूदिति । सन्निधौ हि सामान्यविशेषभावः स्फुटीभविष्यति । यद्यपि दूरस्थस्यापि बाधो न्याय्य एव । तथापीह गौरवं स्वीकृत्य दूरे पाठसामर्थ्याद्बाधो नेति भावः ।

**वायुकः**—इत्यत्र अनुकम्पितोवायुदत्तइतिविग्रहे "बह्वचो मनुष्यनाम्नष्ठ-ज्वा" इति सूत्रेण ठच्प्रत्यये अनुबन्धलोपे "ठाजादावूर्ध्वं द्वितीयादचः" इत्यनेन वायुशब्दात्परस्य ठावस्थायामेव दत्तशब्दस्य लोपे किञ्च पृथक् ठग्रहणस्य प्रयोज-नान्तरमप्यस्ति यदा तु चित्रगुप्रभृतिभ्यष्ठच् तदोगन्तत्वात् कादेशप्राप्त्या प्रथमभि-कादेशस्यासम्भवेनाजादिलक्षणो लोपो न स्यादिति तदर्थमपि ठग्रहणम् । तेन ठाव-स्थायामेवोत्तरपदलोपे कादेशस्यासम्भवादिकादेशे चित्रिक इति रूपं सिद्ध्यतीति बोध्यम् ठच् प्रत्यये स च तद्धितसंज्ञकः । अनुकम्पाच तदर्थः ।

**वेणुकः**—अत्र तद्धितः कन् प्रत्ययः । ह्रस्वहेतुका संज्ञा च तदर्थः ।

**द्रव्यम्**—द्रुः वृक्षस्तस्य विकारोऽवयवो वेत्यर्थे "द्रुाश्च" इत्यनेन यति प्रत्यये अनुबन्धलोपे भसंज्ञायां "ओर्गुणः" इत्यनेन णे "वान्तोयि प्रत्यये" इत्यनेन वान्तादेशे सौ विभक्तौ सोरमादेशे द्रव्यमिति सिद्धम् ।

## ५-प्रश्नोत्तराणि

उ०—**वाक्यादेरिति**—असूयादिष्वर्थेषु वाक्यादेरामन्त्रितस्य द्वे स्त इति सूत्रार्थः तत्र 'असूयायाम्, "सुन्दर सुन्दर वृथा ते सौन्दर्यमिति । अत्र "स्वरितमा-म्रेडितेऽसूयासम्मतिकोपकुत्सनेषु" "आम्रेडितं भर्त्सने" इति सूत्राभ्यां पृथक्कुत्सनभ-र्त्सनग्रहणमनर्थकम् । नह्यसूयां विना कुत्स्यते, नवा अकुपितो भर्त्सयत इति

चेदत्राहुः—'गुरवो हि—हितैषितत्वादकुपिता अपि भर्त्सनं कुर्वते, विनाप्यसूयां कुर्वन्तीति पृथक्तया निर्देशः सूत्रकारेण कृतः। 'साम्रतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः। "लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः' इति। सौन्दर्यमसहमानस्येदं वाक्यम्। गुणेषु-दोषाविष्करणमसूया, सम्मतौ-देव देव वन्द्योऽसि, कोपे-दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि। कुत्सने-धानुष्क धानुष्क वृथा ते धनुः, भर्त्सने-चोर चोर घातयिष्यामि त्वाम्। इत्युदाहरणानि।

---

१९२५

## भ्वाद्यदाद्योः प्रश्नाः।

### द्वितीयपत्रम्।

१—भूयात्, शुयात्, समेयात्, ग्लेयात्, एते कथं सिद्ध्यन्ति।

२—सोढा, वोढा, परिसोढा, एतेषु विशेषकार्याणि प्रदर्श्य साधनीयाः

३—धोक्ष्यति, वक्ष्यति, भक्ष्यति, यक्ष्यति एषु धातून् निर्दिश्य विशेषकार्याणि दर्शनीयानि।

४—इतश्च, अतोलोपः, उश्च, स्वोश्च विभाषेटः, एतेषामेकैकमुदाहरणम्प्रदर्शयत।

५—जक्षतुः, जघ्नतुः, विव्यतुः, सुषु पतुः, ऊषतुः, सूत्राण्युपन्यस्यैतान्साधयत।

## १–प्रश्नोत्तराणि

उ०—भूयात्–'भू' धातोः "आशिषि लिङ्लोटौ" इत्याशीर्लिङि तिपि "इतश्च" इत्यनेनेकारलोपे "लिङाशिषि" इत्यनेनार्द्धधातुकसंज्ञायां 'यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुटि कृते "सुट् तिथोः" इत्यनेन सुटि अनुबन्धलोपे भूयास्स्त् इति स्थिते "किदाशिषि" इत्यनेन यासुटः कित्वे "स्कोः संयोगाद्योरन्ते च"इत्यनेन संयोगादिलोपे प्राप्ते "संयोगान्तस्य लोपः"इत्यनेन च 'योगान्तलोपे प्राप्ते तत्र स्कोरिति लोपस्यासिद्धत्वात् संयोगान्तलोपः प्राप्तः पदान्तसंयोगादिलोपेनानवकाशेन तं प्रबाध्य संयोगादिलोपे ततो यासुटः सकारस्या-

पि तथैव लोपे "सार्वधातुकार्द्धधातुकयोः" इत्यनेन गुणे प्राप्ते "क्ङिति च" इत्यनेन निषेधे भूयादिति सिद्धम् ।

नन्वेवमपि संयोगादिलोपस्य "पूर्वत्रासिद्धम्" इत्यसिद्धत्वाद्धल्ङ्यादिलोपः स्यात्, पदान्ते संयोगादिलोपस्य मृट् मृडित्यादौ सावकाशत्वादितिचेत् । अत्राहुः सुड्यासुटोः सतोस्ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनापृक्तत्वाऽभावात्, हलन्तायाः प्रकृतेः परत्वाभावाच्चोक्तदोषशङ्कैव नास्तीति दिक् ।

यूयात्—'यु'धातोराशीर्लिङि तिपि अनुबन्धलोपे "इतश्च"इतीकारलोपे "यासुटपरस्मैपदेषूदात्तोङिच्च"इति सूत्रेण यासुटि सुटावितौ "सुट्तिथोः" इति सुटि सकारद्वयस्यापि लोपे "अकृत्सार्वधातुकयोर्दीर्घः"इतिसूत्रेण धातो-रुकारस्य दीर्घे यूयात् इति सिद्धम् ।

अणः किम् समेयात्—समाङ् पूर्वात् 'इण्' धातोराशीर्लिङि तिपि अनुब-न्धलोपे "इतश्च" इतीकारलोपे यासुटि सुटि च कृते "स्कोः संयोगा-द्योरन्तेच"इतिसूत्रेण सकारद्वयस्यापि लोपे सम्+आ+इयादिति स्थिते आका-रेकारयोर्गुणे एयादित्यस्य समित्युपसर्गात्परत्वेपि "एतेर्लिङि"इति सूत्रेऽणोऽनुवृत्ते-र्ह्रस्वाभावे समेयादिति सिद्ध्यति । तद्ग्रहणाभावे तु ह्रस्वापत्तिः स्यादिति । नन्वेवं समीयादितिप्रयोगो न स्यादित्याशङ्क्याह समीयादिति प्रयोगस्तु भौवादि-कस्य । इटकिटकटीत्यत्र प्रश्लिष्टस्य इ धातोराशीर्लिङि इदं रूपम् । वी गतीत्यत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यत इति मते तु विध्यादिलिङ्यपि भवत्येवेति बोध्यम् ।

ग्लेयात्—हर्षक्षयार्थक'ग्लै' इत्यस्माद्धातोः "आदेचउपदेशेऽशिति"इत्या-त्वे आशीर्लिङि तिपि तिपः इकारलोपे यासुटि सुटि च कृते "स्कोरिति" सकारद्वय-स्यापि लोपे "वान्यस्य संयोगादेः" इत्यनेन विकल्पेन एत्वे कृते ग्लेयादिति रूपम् । तदभावेतु ग्लायादिति रूपम् ।

## २—प्रश्नोत्तराणि

२ उ०—गोढा—ऊकारेत्संज्ञक सम्वरणार्थक 'गुह्'धातोर्लुटि तिपि "स्यता-सी लृलुटोः" इत्यनेन तासी प्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन डादेशे डित्वात्तासष्टिलोपे गुह् त् आ इति स्थिते ऊदित्वात् "स्वरतिसूतिसू-यतिधूञूदितो वा" इति सूत्रेण पाक्षिके इडभावेऽजादिप्रत्ययत्वाऽभावात्

"ऊदुपधायागोहः" इत्यूत्वाभावे "पुगन्तलघूपधस्य च" इति गुणे "हो ढः" इति हकारस्य ढत्वे "झषस्तथोर्धोऽधः" इत्यनेन तकारस्य धत्वे ष्टुत्वे "ढो ढे लोपः" इति ढकारस्य लोपे च गोढेति रूपम्। इटिकृते स्वजादित्वात् "ऊदुप-धायागोहः" इत्यनेनोकारस्य ऊकारे गूहितेति रूपम्।

वोढा—प्रापणार्थक'वह्' धातोर्लुटस्तिपि "स्यतासी लृलुटोः" इति तासी-प्रत्ययेऽनुबन्धलोपे तिपो "लुटः प्रथमस्य डारौरसः" इत्यनेन डादेशे डित्वा-ट्टिलोपे च कृते "हो ढः" इत्यनेन हकारस्य ढत्वे "झषस्तथो"रित्यनेन तकारस्य धकारे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वेन धकारस्य ढकारे "सहिवहोरोदवर्णस्य" इत्यनेनवकारोत्तराकारस्यौत्वे वोढेति सिद्ध्यति।

परिसोढा—परिपूर्वात् मर्षणार्थक 'षह्' धातोः "धात्वादेः षः सः" इत्यनेन सकारे लुटि तिपि प्रत्यये "स्यतासी लृ टोः" इत्यनेन तासी प्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन डादेशे डित्वाट्टिलोपे च सह् ता इति स्थिते "हो ढः" इत्यनेन ढत्वे "झषस्तथोर्धोऽधः" इत्यनेन तकारस्य धकारे धस्य "ष्टुनाष्टुः" इत्यनेन ष्टुत्वेन ढकारे "ढो ढे लोपः" इति पूर्वस्य ढस्य लोपे स ढा इत्यवस्थायाम् "सहिवहोरोदवर्णस्य" इत्यनेन सकारोत्तराकारस्यौत्वे "परि-निविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इति षत्वे प्राप्ते "सोढः" इत्यनेन निषेधे परिसोढेति सिध्यति।

## ३—प्रश्नोत्तराणि

२ उ०—धोक्ष्यति—'दुह्' धातोर्लृटि तिपि "स्यतासी लृलुटोः" इत्य-नेन स्य प्रत्यये "दादेर्धातोर्घः" इति हकारस्य घकारे तस्य "खरि च" इति चर्त्वेन ककारे धातोर्दकारस्य "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावेन धकारे सकारस्य "आदेशप्रत्यययोः" इति षत्वे पुगन्तलघूपधस्य च" इति गुणे धोक्ष्यतीति सिद्धम्।

वक्ष्यति—'वह्' धातोर्लृटि तिपि "स्यतासी लृलुटोः" इति सूत्रेण स्य प्रत्यये "हो ढः" इत्यनेन हस्य ढत्वे "षढोः कः सि" इत्यनेन ढस्य कत्वे सका-रस्य "आदेशप्रत्यययोः" इति षत्वे वक्ष्यतीति सिध्यति।

भक्ष्यति—भौवादिकाद् सेवार्थक'भज्' धातोर्लृटि तिपि स्य प्रत्यये "व्रश्च-भ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन जस्य षत्वे "षढोः कः

सि" इति षस्य कत्वे सकारस्य "आदेशप्रत्यययोः" इति षत्वे भक्ष्यति इति सिद्धम् ।

यक्ष्यति—'यज्' धातोर्लृटि तिपि स्य प्रत्यये "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति षत्वे "षढोः कः सि" इति षस्य कत्वे सकारस्य षत्वे कष संयोगे यक्ष्यतीति रूपम् ।

## ४—प्रश्नोत्तराणि

उ०—भूयादित्यत्र—"इतश्च"इति तिप इकारलोपः । "अतोलोपः" चिकीर्ष्यात् । अत्र यासुट आर्धधातुकोपदेशे चिकीर्षइत्यस्याकारान्तत्वादकारलोपः । "उश्च" अकृत । अत्र कृधातोः परस्य सिचः कित्वाद्धातोर्गुणाभावः । "म्वोश्च"—कुर्वः, कुर्मः अत्र वसि मसि च प्रत्ययोकारस्य लोपः ।

"विभाषेटः" । अयिषीढ्वम् । अयिषीध्वम् । अत्र धकारस्य विकल्पेन मूर्धन्यादेशः ।

## ५—प्रश्नोत्तराणि

५ उ०—जक्षतुः—'अद्' धातोर्लिटो विवक्षायाम् "लिट्यन्यतरस्याम्" इत्यनेनादो घस्लादेशे "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः"इति सूत्रेण तसोऽतुसि "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायां "हलादिः शेषः"इत्यनेन लोपे घघस्+अतुसिति जाते "कुहोश्चुः" इति चुत्वे जश्त्वे जघस्+अतुस् इति स्थिते "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्यनेनोपधाऽकारस्य लोपे तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद् घकारस्य चर्त्वे "शासिवसिघसीनाञ्च" इति सूत्रेण सकारस्य षत्वे सस्य रुत्वे विसर्गे च जक्षतुः इति रूपम् भवति ।

जघ्नतुः—'हन्' धातोर्लिटि अतुसि "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्याससञ्ज्ञायां "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः"इत्यनेन चुत्वेनाभ्यासहकारस्य झकारे तस्य जश्त्वेन जकारे "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्युपधालोपे "होहन्तेर्ञ्णिन्नेषु"इति हकारस्य कुत्वेन घकारे रुत्वे विसर्गे च कृते जघ्नतुः इति रूपम् जातम् ।

विव्यतुः—'अज्'धातोरार्धधातुकविवक्षायाम् "अजेर्व्यघञपोः"इति सूत्रेण वीभावे सति लिटि अतुसि "लिटि धातोरनभ्यासस्य" इति द्वित्वेऽभ्यास-

संज्ञायां "ह्रस्वः" इत्यनेनाभ्यासह्रस्वे "असंयोगाल्लिट् कित्" इत्यनेन कित्वाद्गुणाऽभावे इयङोपवादेन "एरनेकाचोऽसंयोगपूर्वस्य" इत्यनेन यणि विव्यतुः इति सिद्धम् ।

नन्वत्र द्वितीयवकारस्य यकारात्मकहल्परकत्वादुपधायां चेत्यनेनेकारस्य दीर्घः स्यादिति चेन्न । इकारस्थानिकस्य यकारस्याचः परस्मिन्निति स्थानिवत्वेन हल्पर-त्वाभावात् । नच "न पदान्तेति" निषेधः शङ्क्य इति चेन्न । 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति निषेधादिति दिक् ।

सुषुषुपतुः—शयनार्थक 'ष्वप्' धातौ"धात्वादेः षः सः" इति सकारे लिटि तस् प्रत्यये परस्मैपदानामित्यतुसि द्वित्वे सम्प्रसारणे च प्राप्ते यद्यपि पूर्वं धातुः—साधनेन युज्यते पश्चादुपसर्गेणेति परिभाषया द्वित्वात्प्राक् सम्प्रसारणं न लभ्यते तथापि लक्ष्यानुसारादिह पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति परिभाषामा-श्रित्य द्वित्वात्प्रागेव परत्वाद्वचिस्वपीत्यनेन सम्प्रसारणे सति सुप् इत्यस्य सु इत्युप-सर्गपूर्वकत्वमादाय "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" इति षत्वे च कृते सति पुनः प्रसङ्गविज्ञानात् षुप् इत्यस्य कृत षत्वस्य द्वित्वे सति भागद्वयेऽपि षकारे सका-रस्य सत्वे विसर्गे च कृते सुषुषुपतुः इति सिद्धम् ।

नच कृतषत्वस्य कथं द्वित्वं द्वित्वे कर्त्तव्ये षत्वस्यासिद्धत्वादिति वाच्यम् । तन्न 'पूर्वत्रासिद्धीयमद्विर्वचने' इति परिभाषयाऽसिद्धत्वाभावादिति दिक् ।

ऊषतुः—दाहार्थक 'उष' इत्यस्माद्धातोर्लिटि अतुसि पुगन्तस्येत्यनेन गुणे प्राप्ते "असंयोगाल्लिट् कित्" इत्यनेन कित्वाल्लघूपधगुणाभावे "लिटि धातोरन-भ्यासस्य" इति द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन हलादिः शेषे पर्जन्यवल्लक्षणप्रवृत्त्या "ह्रस्वः" इत्यनेनाभ्यासस्य ह्रस्वे सवर्णपरकत्वाभावाद् "अ-भ्यासस्यासवर्णे" इत्यनेनेयङभावे सवर्णदीर्घे सकारस्य रुत्वे विसर्गे च कृते 'ऊषतुः' इति रूपम् । नन्वत्र सवर्णदीर्घसम्पन्नस्योकारस्य एकादेशतया पूर्वान्तव-द्भावेनाभ्याससम्बन्धित्वात्—"ह्रस्वः" इति ह्रस्वः स्यादिति चेन्न । लक्ष्ये लक्षणं सकृदेव प्रवर्त्तत इति न्यायमाश्रित्य पर्जन्यवल्लक्षणप्रवृत्त्या पूर्वप्रवृत्तस्य ह्रस्वस्य दीर्घे कृते पुनः प्रवृत्त्यभावादिति दिक् ।

---

१९८६

१ पत्रम् ।

१—आयसम , आग्निष्टोमिकः, एतावर्थनिर्देशपूर्वकं प्रसाध्य कलापिना प्रोक्तमधीयते कालापा इत्यत्र इनण्यनपत्ये, इत्यनेन प्रकृतिभावः कुतो न भवतीति सप्रमाणमुच्यताम् ।

२—नैयग्रोधम् , मल्लिका, विदारी, पाटलानि पुष्पाणि, अशोकम् , करवीरम् ,

३—न्याय्यम् , सतीर्थ्यः, नभ्यम् , नस्यम् अत्र केष्वर्थेषु के प्रत्यया इति ससूत्रमुच्यताम् ।

४—पंक्तिविंशत्यादिशतान्तेषु सूत्रोपात्तेषु शब्देषु प्रकृतिविशेषान् , प्रत्ययविशेषान् निपातितकार्यस्वरूपाणि च प्रदर्श्य आर्धमासिकः माहानाम्निकः, चातुर्मासी एतान् विग्रहनिर्देशपूर्वकं साधयन्तु ।

५—समांसमीना, निविडम् , इन्द्रियम् , पैषमः, वाचिकः, देवत्रा एषां कथं सिद्धिः, किञ्च—'एकं बहुव्रीहिवत्' , इति सूत्रस्य फलमिति सुस्पष्टमुच्यताम् ।

# १ प्रश्नोत्तराणि

उ०—आयसम्—श्रेयसि भवमित्यर्थे श्रेयः शब्दात् तत्र भव इत्यनेनाणि "तद्धितेष्वचामादेः" इति प्राप्तवृद्धिम्प्रबाध्य "देविकाशिंशपा" इत्यादिना—एकारस्य आकारे तद्धितान्तत्वात्प्रातिपादिक संज्ञायाम् सौ विभक्तौ सोरमादेशे आयसम् इति सिध्यति ।

आग्निष्टोमिकः—अग्निष्टोमस्य व्याख्यानस्तत्र भवो वेत्यर्थेऽग्निष्टोम शब्दात् "क्रतुयज्ञेभ्यश्च" इति ठञि "ठस्येक" इत्यनेन इकादेशे च कृते "तद्धितेष्वचामादेः" इत्यादि वृद्धौ प्रातिपदिकसंज्ञायाम् सौ रुत्वे विसर्गे च कृते—आग्निष्टोमिकः इति सिद्धम् ।

कालापाः—कलापिना प्रोक्तमधीयते इति विग्रहे "तदधीते तद्वेद" इत्यनेनाण् प्रत्यये अनुबन्धलोपे णित्वादादिवृद्धौ "नस्तद्धिते" इत्यनेन टिलोपे प्राप्ते "इनण्यनपत्ये" इत्यनेन प्राप्तप्रकृतिभावं प्रबाध्य "सब्रह्मचारीपीठसर्पिकलापी" इत्यादिना नान्तस्य टिलोपेऽनन्तत्वाभावात्प्रकृतिभावो न प्रवर्त्तते इति दिक्

## २–प्रश्नोत्तराणि ।

उ०–नैयग्रोधम्—न्यग्रोधस्य विकार इति विग्रहे "पलाशादिभ्योऽण्" इत्यनेनाणि—णित्वादादिवृद्धौ प्राप्तायां "न्यग्रोधस्य च केवलस्य" इत्यनेन वृद्धिनिषेधे "नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" इत्यैजागमे च कृते "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां सौ सोरमादेशे नैयग्रोधमिति सिद्धम् ।

मल्लिका—मल्लिकायाः पुष्पमिति विग्रहे "मल्लिकादीनाञ्च" इति फिट्सूत्रेण मध्योदात्तात् मल्लिका शब्दात्—"अनुदात्तादेश्च" इत्यनेनाञो "पुष्पमूलेषु बहुलम्" इत्यनेन लुपि–"लुपियुक्तवद्व्यक्तिवचने" इत्यनेन युक्तवत्वात्स्त्रीत्वे "अजाद्यतष्टाप्" इत्यनेन टापि अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोर्लोपे च कृते मल्लिकेति रूपम् ।

विदारी– विदार्या मूलमिति विग्रहे विहितङीषन्ताद्विदारीशब्दात् "अनुदात्तादेश्च" इति विहितस्याञो "पुष्पमूलेषु बहुलम्" इत्यनेन लुपि युक्तवद्भावात्स्त्रीत्वे च प्रातिपदिकत्वात्सौ सोर्लोपे—विदारीति सिध्यति ।

पाटलानि पुष्पाणि—पाटलस्य पुष्पाणीति विग्रहे बिल्वादित्वात् "बिल्वादिभ्योऽण्—" इत्यनेनाणि "पुष्पमूलेषु बहुलम्" इति बहुलग्रहणाल्लुबभावे णित्वादादिवृद्धौ पाटलानि इति सिद्धति । अत्र लुपि सति युक्तवद्भावे च पाटल इति पुंस्त्वं स्यात् ।

अशोकम्—अशोकस्य पुष्पमशोकमिति विग्रहे "अनुदात्तादेश्च" इत्यञो पुष्पमूलेषु बहुलम्" लुपि लुपियुक्तवदिति युक्तवद्भावेन पुंस्त्वेप्राप्ते बहुलग्रहणात्तन्निषेधे प्रातिपदिकसंज्ञाया सौ सोरमादेशे—अशोकमिति सिद्धम् ।

एवं करवीरस्य पुष्पमिति विग्रहे करवीरमित्यत्रापि बोध्यम् ।

## ३—प्रश्नोत्तराणि ।

उ०—न्याय्यम—न्यायादनपेतमित्यर्थे न्यायशब्दात् "धर्मपथ्यर्थन्यायादनपेते" इति सूत्रेण यत्प्रत्यये अनुबन्धलोपे भसंज्ञायाम्–"यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे न्याय्यमिति सिद्धम् ।

सतीर्थ्यः—समाने तीर्थे गुरौ वसतीत्यर्थे समानतीर्थशब्दात्—"समानतीर्थेवासी" इति सूत्रेण यत्प्रत्यये अनुबन्धलोपे, "तीर्थे ये—" इत्यनेन समा-

नस्य सभावे "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च सतीर्थ्यः इति सिद्धयति ।

नभ्यम्—नाभये हितमित्यर्थे ( अत्रनाभिशब्देन रथाङ्गं गृह्यते । "नाभिनभञ्च" इति वार्तिकेन नाभि शब्दात् यत्प्रत्यये अनुबन्धलोपे नभादेशे च कृते भसंज्ञायां "यस्येति च" इत्यकारलोपे नभ्यमिति सिद्धम् ।

नस्यम्—नासिकायै हितमित्यर्थे नासिकाशब्दात् "शरीरावयवाद्यत्" इत्यनेन यत्प्रत्ययेऽनुबन्धलोपे "नस् नासिकायाः" इति नसादेशे च नस्यमिति सिद्धम् ।

## ४—प्रश्नोत्तराणि ।

उ०—पंक्तिः—पञ्चपदानि, परिमाणमस्येत्यर्थे पञ्चन् शब्दात् ति प्रत्ययः प्रकृतेष्टिलोपः चकारस्य "चोः कुः" इति कुत्वम्, अनुस्वारे परसवर्णे च कृते प्रातिपदिकत्वात् सौ रुत्वविसर्गे च कृते पंक्तिरिति सिध्यति ।

विंशतिः—द्वौ दशतौ परिमाणमस्येति विग्रहे द्विदशन् शब्दात् शतिप्रत्ययः द्वयोर्दशतोर्विन्भावे च कृते अपदत्वादनुस्वारे च कृते प्रातिपदिकत्वात्सौ रुत्वविसर्गे च कृते विंशतिरिति सिध्यति । केचित्तु—विन्भावमुक्त्वा अपदत्वं चेति न पठन्ति ।

त्रिंशत्—त्रयोदशतः परिमाणमस्येत्यर्थे त्रिदशन् शब्दात् शत्प्रत्ययः प्रकृतेः त्रिन्भावश्चेति प्रातिपदिकत्वात्सौ सोर्लुकि ।

त्रिंशदिति सिद्धम् । मतान्तरे तु—त्रिंभाव इति ।

चत्वारिंशत्—चत्वारो दशतः परिमाणमस्येति विग्रहे चतुर्दशच्छब्दात् शत्प्रत्ययः प्रकृतेः चत्वारिम्भावश्च । प्रातिपदिकत्वात्सौ सोर्लुकि चत्वारिंशदिति सिद्धम् ।

पञ्चाशत्—पञ्चदशतः परिमाणमस्य संघस्येत्यर्थे पञ्चदशच्छब्दात् शत्प्रत्ययः प्रकृते पञ्चादेशश्च । प्रातिपदिकत्वात्सौ सोर्लुकि पञ्चाशदिति सिद्धम् ।

षष्ठिः—षड्दशतः परिमाणमस्य संघस्येति विग्रहे षड्दशच्छब्दात्तिप्रत्ययः प्रकृतेः षष्जश्त्वाभावश्च अपदत्वं च प्रातिपदिकत्वात्सौ सस्यरुत्वे विसर्गे च षष्ठिः इति सिध्यति ।

सप्ततिः । सप्तदशतः परिमाणमस्य संघस्येत्यर्थे सप्तदशच्छब्दात् तिप्रत्ययः प्रकृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे चकृते सप्ततिः इति साधुः ।

अशीतिः—अष्टौ दशतः परिमाणमस्येति विग्रहे पंक्तिविंशतीत्यनेन तिप्रत्ययः प्रकृतेः अशीत्यादेशश्च प्रातिपतिकत्वात्सौ रुत्वविसर्गे चकृते अशीतिरितिसाधु ।

नवतिः—नव दशतः परिमाणमस्येत्यर्थे नवदशन् शब्दात् ति प्रत्यये प्रकृतेः नवादेशे च कृते प्रातिपदिकत्वात्सौ रुत्व विसर्गे कृते नवतिरिति सिद्धम् । शतम्— दश दशतः परिमाणमस्य संघस्येति विग्रहे तप्रत्यये शादेशे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे शतमिति सिद्धम् ।

आर्धमासिकः—अर्धमासं ब्रह्मचर्यमस्येत्यर्थेऽर्धमासशब्दात् ब्रह्मचर्येऽभिधेये "तदस्य ब्रह्मचर्यम्" इति सूत्रेण ठञि ठस्येक इत्यनेनेकादेशे "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धौ भसंज्ञायां "यस्येति च" इत्यकारलोपे सौ रुत्वविसर्गे च कृते आर्धमासिक इति सिद्धम् ।

माहानाम्निकः—महानाम्न्यो 'विदामघवन्' इत्याद्या ऋचः, तासां ब्रह्मचर्यमस्येति विग्रहे महानाम्नीशब्दात्—"महानाम्न्यादिभ्यः षष्ठयन्तेभ्य उपसंख्यानम्" इति वार्तिकेन ठञि ञकारस्येत्संज्ञायां लोपे च कृते "ठस्येकः" इत्यनेनेकादेशे ञित्वात् "तद्धितेष्वचामादेः" इत्यादि वृद्धौ "यचि भम्" इत्यनेन भसंज्ञायां "यस्येति च" इतीकारलोपे प्रातिपदिकत्वात्सौ रुत्वविसर्गे च कृते माहानाम्निक इति साधुः ।

चातुर्मासी—चतुर्षु मासेषु भवतीत्यर्थे चतुर्मास शब्दात् "अण्संज्ञायाम्" इति वार्तिकेनाणि णित्वादादि वृद्धौ अण्णन्तात्—"टिड्ढाणञ्" इति ङीपि भसंज्ञायां "यस्येति च" इत्यकारलोपे "चातुर्मासी" साधुः ।

## ८-प्रश्नोत्तराणि

उ०—समांसमीना—समायां समायां विजायत इत्यर्थे सप्तम्यन्तद्वयसमुदायात् ख प्रत्यये निपातनात्पूर्वपदेविभक्तेरवयवस्य यकारस्य लोपेऽवशिष्टस्य विभक्त्यंशस्य चालुकि उत्तरपदे तु विभक्तेर्लुकि कृते "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यनेन खस्येनादेशे "यचि भम्" इति भसंज्ञायां "यस्येति च" इत्यकार लोपे समांसमीनेति सिद्धम् ।

**निबिडम्**—नि उपसर्गात् "नेर्बिडज्बिरीसचौ" इत्यनेन बिडच् प्रत्यये कृते सति निबिडम् इति रूपं सिद्धम् ।

**इन्द्रियम्**—इन्द्र आत्मा तस्य लिङ्गमित्याद्यर्थेषु "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" इत्यनेन निपातनादिन्द्रशब्दाद् घच् प्रत्यये अनुबन्धलोपे "आयनेयीनीयियः" इत्यनेन घस्येयादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे इन्द्रियम् इति सिद्धम् ।

**ऐषमः**—अस्मिन्सम्वत्सरे इत्यर्थे इदं शब्दात् 'इदम् इश्' समसण्प्रत्यये अनुबन्धलोपे णित्वादचोञ्णितीत्यनेनादिवृद्धौ सकारस्य षत्वे च कृते प्रातिपदिकत्वात्सौ रुत्वविसर्गे च ऐषमः इति सिद्धम् ।

**वाचिकः**—वाचि आशीर्यस्य स वागाशीस्तेन दत्तो वागाशीर्दत्तः । अनुकम्पितो वागाशीर्दत्त इति विग्रहे अनुकम्पायां वागाशीर्दत्त शब्दात् "बह्वचो मनुष्यनाम्नष्ठज्वा" इति सूत्रेण ठचि अनुबन्धलोपे 'एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य' इति वार्तिकेन वागित्येकाक्षरपूर्वपदात्परयोराशीर्दत्तशब्दयोर्लोपे सति ठस्येकादेशे भसंज्ञायामन्तर्वर्त्तिविभक्त्याः पदत्वमाश्रित्य प्रवृत्तयोर्कुत्वजश्त्वयोर्भसंज्ञया बाधानिवृत्तौ प्रातिपदिकत्वात्सौ रुत्वविसर्गे च कृते वाचिक इति साधुः ।

**देवत्रा**—देवान्वन्दे इत्यर्थे देव शब्दात् "देवमनुष्यपुरुषपुरुमर्त्येभ्यो-द्वितीयासप्तम्योर्बहुलम्" इत्यनेन त्रा प्रत्यये प्रातिपदिकत्वात्सौ सोर्लुकि देवत्रा इति साधुः ।

**एकं बहुव्रीहिवदिति**—ननु—एकं समासवदितिन्यासेनैव सिद्धे पुनः सूत्रे बहुव्रीहिग्रहणं "बहुव्रीहौ प्रकृत्यापूर्वपदम्" इत्यनेन पूर्वपदमिति स्वरार्थम् । ननु बहुव्रीहिवत्वे सति न बहुव्रीहाविति सर्वनामत्वनिषेधादेकैकस्मै देहीत्यादौ कथं सर्वनामकार्यमित्यत आह—न बहुव्रीहावित्यत्रेति—अयम्भावः—विभाषा दिक्समासे बहुव्रीहौ इत्यतो बहुव्रीहिग्रहणानुवृत्त्यैव सिद्धे न बहुव्रीहावित्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहि लाभार्थम् । अतः बहुव्रीहिवदिति कथनेनातिदिष्टबहुव्रीहौ सर्वनामत्वनिषेधो नेत्यर्थः । तदाह—तेनातिदिष्टबहुव्रीहौ सर्वनामतास्त्येवेति प्राञ्चः । तदेवं प्राचीनोक्तं परिहारमुक्त्वा सिद्धान्तिमतेनाह—वस्तुतस्तु—भाष्यमते प्रत्याख्यातमेतत् । अर्थादेतत् "न बहुव्रीहौ" इति सूत्रं प्रत्याख्यातम् । एवं च बहुव्रीहावपि सर्वनामत्वस्य भाष्यसम्मतया बहुव्रीहिवत्वातिदेशे सत्यपि सर्वनामत्वं निर्बाधमिति

भावः। सूत्रमतेऽपि उपसर्जनत्वादेव बहुव्रीहौ सर्वनामत्वनिषेधसिद्धेः न बहुव्रीहाविति बहुव्रीह्यर्थके अलौकिकविग्रहवाक्ये एव समासात्प्राक् सर्वनामत्वनिषिद्ध्यत इति प्रागेवोक्तम्। तस्मादिह बहुव्रीह्यतिदेशप्रयुक्तसर्वनामकार्याभावशङ्कैव नास्तीत्यर्थं इति दिक्।

---

१८२८

२ पत्रम्

१—यासुटो ङित्करणेन भूयादित्यत्र गुणाभावरूपस्य फलस्य सत्वेऽपि कथं 'ङित्वोक्तेः, इत्यादिग्रन्थेन प्रतिपादितः दीक्षिताभिप्रायः सङ्गच्छते। कथं वा ङित्वोक्तिं परित्यज्य शानचः शित्वमाश्रितमित्युदाहरणपुरस्सरं लेखसौष्ठवेन व्याख्येयम्।

२—अकि, वकि, मकि, ओखृ; उख धातूनां लिटि लुङि चैकवचने सिद्धानि रूपाणि प्रदर्श्य प्रण्यपतत्, परिसोढा, गोढा, भृषीष्ट, एतेषां सिद्धिप्रकारः प्रदर्शनीयः।

३—चिण्प्रत्ययान्तक्रियायां सर्वत्र तृतीयान्तस्य कर्त्तुरन्वयो दृश्यते, एवं सति 'अप्यायि तरुहस्तोऽसौ इत्यत्र 'असौ' इत्यस्य अप्यायि इत्यत्र कथमन्वयः सङ्गच्छते इति प्रतिपाद्य माङि लुङ् इति सूत्रस्य सत्वेऽपि "वीर्यं मा न दद्दर्श त्वम्" इति प्रयोगः कथं सङ्गच्छते इति प्रतिपादनीयम्।

४—आरतुः, वीभत्सते, ऊयतुः, शिश्वाय, एतेषां सिद्धिप्रकारं ब्रूत।

५—स्तवीति, ऊर्णुनाव, अध्यगीष्ट, विदाङ्करोतु, एधि, सधि, एतानि साधनीयानि।

६—"भवति" इत्यत्र तिबर्थम्, नाट्यनृत्ययोर्भेदश्च प्रतिपाद्य उवोष्ट, परिसहते, अपोषीत्, इलेषिता एतेषां साधुत्वमसाधुत्वं वेति युक्तिपूर्वकं लेखनीयम्।

## १—प्रश्नोत्तराणि

१ उ०—यासुटोङित्वेनेति—ननु लिङो ङित्वात्तत्स्थानिकादेशे च स्थानिवद्भावेन ङित्वस्यानयनादचारितार्थ्यं ( अवयवेऽचारितार्थो विधिः समुदायस्योपका-

रकः भवति ) इति न्यायेन समुदाये ङित्वादिष्टसिद्धौ पुनर्यासुटो ङित्वविधानं व्यर्थमित्याशङ्क्य समाधत्ते । ङित्वोक्तेर्ज्ञायते क्वचिदनुबन्धकार्येऽपीत्यादि अयम्भावः—ङित्वविधानसामर्थ्यात् नस्यपीतिज्ञापकज्ञापितस्य क्वचिदनुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तिरूपस्य क्वाचित्कत्वबोधनेन टित्वोगित्वयोरनतिदेशेन वक्ष्यमाणेत्यत्र 'टिड्ढाणञि'ति ङीप् सिद्धिः ।

ननु ङिच्च पिन्नेति भाष्याद्युक्तज्ञापनासम्भवात्तत्रत्यदोषस्तदवस्थएवेत्यरुचेराह—श्नः शानचः शित्वमपीति—अयम्भावः—श्नागतशित्वस्य स्थानिवद्भावेन शानजपितत्सत्त्वात्पुनः शानचः शित्वेन कचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधज्ञापनाद्वेति । भूयादित्यत्र यासुटो ङित्वस्य गुणाभावरूपं न फलं तत्र गुणाभावस्य लिङो ङित्वेनैव सिद्धत्वादिति दिक् ।

## २—प्रश्नोत्तराणि

उ०—अकि—लिट्येकवचने–आनङ्के, लुङि चैकवचने–आङ्किष्ट—

वकि—ववङ्के, अवङ्किष्ट । मकि—ममङ्के, अमङ्किष्ट । ओखृ—ओखाञ्चकार, औखीत् । उख—उवोख, औखीत् ।

प्रण्यपप्तत्–इत्यर्थक पत्लृधातोर्लुङ्स्तिपि तिप इकारपकारयोर्लोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागने अनुबन्धलोपे लृदित्वात्—पुषादिद्युताद्य्लृदितः परस्मैपदेषु'इत्यनेन च्लेरङि कृते अपत् अत इति स्थिते "पतः पुम्" इत्यनेनाङिपरे पुमागमे मित्वात् ' मिदचोऽन्त्यात्परः" इत्यनेन तस्मिचन्त्यादचः परे सति प्रनीत्युपसर्गसमभिव्याहारेण "नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च" इत्यनेन णत्वे प्रण्यपप्तदिति सिद्धम् ।

परिसाढा—७ पृष्ठे द्रष्टव्यम् ।

गोढा—६ पृष्ठे द्रष्टव्यम् ।

भृषीष्ट—भरणार्थक भृञ् इत्यस्माद्धातोः लिङ्लकारे आत्मने पदे त प्रत्यये लिङः "सीयुट्" इति सीयुटि "सुट्तिथोः" इत्यनेन सुटि च कृतेऽनुबन्धलोपे 'उश्च" इत्यनेन कित्वाद्धातोर्गुणाभावे सकारद्वयस्यापि "आदेश प्रत्यययोः" इत्यनेन षत्वे भृषीष्ट इति साधुः ।

## ३—प्रश्नोत्तराणि

उ०—यत्र 'चिण्' प्रत्ययो भावकर्मणोर्विधीयते तत्रैव कर्त्ता तृतीयान्तपदेन गृह्यते। प्रत्ययेन च भावकर्मणोरुक्तत्वात् "उक्तार्थानामप्रयोगः" इति न्यायादनुक्ते-कर्त्तरि तृतीयाविधानात् एवञ्च "अप्यायितरुहस्तोऽसौ"इत्यत्र तु"दीपजनबु-धपूरितायिप्यायिभ्योऽन्यतरस्याम्" इत्यनेन कर्त्तर्येव चिण्विधानेन कर्तुर-भिहितत्वात्प्रथमैव युक्ताऽतोऽसावितिपदस्य नासङ्गतिः। माङि लुङिति सूत्रेण माङो-योगे एव लुङ्विधीयते—'वीर्यं मा न ददर्श त्वम्' इत्यादौ तु निषेधार्थको माशब्दोऽ-व्ययान्तरमतो लिट् न विरुध्यत इति दिक्।

## ४—प्रश्नोत्तराणि।

उ०—आरतुः—भौवादिकाद् ऋधातो लिंटलकारे तस्थाने तसि तस्यातुसादेशे "लिटिधातोरनभ्यासस्ये"ति द्वित्वे "पूर्वोऽभ्यास" इत्यभ्याससञ्ज्ञायां उरदत्वे रपरत्वे च कृते "हलादिःशेषः" इति लोपे "अत आदेः" इत्यभ्यासस्य दीर्घे आ। ऋ आतुस् इति जाते प्रत्ययस्य कित्वाद्गुणनिषेधे प्राप्ते "ऋच्छत्यृताम्" इति सूत्रेण गुणे रपरत्वे सवर्णदीर्घे च आरतुः इति साधु।

बीभत्सते—बध धातोः "मान्बधदानशानभ्योदीर्घश्चाभ्यासस्य" इति सूत्रेण बधेश्चित्तविकोरेऽर्थे सनि बकारस्य "एकाचोबशोभष् झषन्तस्य स्ध्वोः" इति सूत्रेण भष्भावेन भकारे धकारस्य चर्त्वे च तत्र भष्चर्त्वयोरसिद्धत्वाद् सन्यङोश्चेति बध् इत्यस्य द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससञ्ज्ञायां "हलादिः शेषः" इत्यनेन लोपे "सन्यतः" इत्यनेनाभ्यासस्येत्वे "दीर्घो लघोः" इति दीर्घे बीभत्स इति सनन्तस्य "सनाद्यन्ता धातवः"इत्यनेन धातुसञ्ज्ञायां धातुत्वाल्लट् लकारे आत्मनेपदे त प्रत्यये "टित आत्मने पदानां टेरे" इत्यनेन एत्वे शपि पूर्वरूपे च कृते बीभत्सते इति साधु।

ऊयतुः—तन्तुसन्तानार्थक वेञ् इत्यस्माद्धातोर्लिंट्लकारेऽतुसि "वेञो वयिः" इत्यनेन वयादेशे द्वित्वात्सम्प्रसारणं तदाश्रयञ्चबलवदिति न्यायेन द्वित्वात् पूर्वस्य "ग्रहिज्या वयिव्यधि" इत्यादिना चानभ्यासवकारस्य सम्प्रसारणेन उकारे "लिटिवयो यः" इति यकारस्य सम्प्रसारणनिषेधे लिटिधातोरिति द्वित्वेऽ-

भ्याससञ्ज्ञायां "हलादिः शेषः" इति लोपे उकारयोः "अकः सवर्णे दीर्घः" इति । दीर्घे ऊयतुः इति सिद्धम् ।

शिश्वाय—टु ओश्वि गतिवृद्ध्योरित्यर्थकात् श्विधातो लिंट्लकारे लिट-स्तिपि परस्मैपदानामिति णलि च कृतेऽनुबन्धलोपे द्वित्वात्प्रागेव "विभाषा श्वेः" इत्यनेन सम्प्रसारणे सम्प्रसारणाच्चेति पूर्वरूपे ततो द्वित्वे "अचोऽञ्णिति" इति वृद्धौ अवादेशे च कृते शुशावेति रूपम् । सम्प्रसारणाभावपक्षे श्वि इत्यस्य द्वित्वे पूर्वस्याभ्याससञ्ज्ञायां लिटयभ्यासस्येत्यनेन प्राप्तस्य सम्प्रसारणस्य 'श्वयतेर्लिटथ-भ्यासलक्षणप्रतिषेधः' इति वार्तिकेन निषेधे "हलादिः शेषः" इत्यनेन लोपे कु-हुपादेशायादेशयोश्च शिश्वाय इति पाक्षिकं रूपं सिध्यतीति दिक् ।

## ७–प्रश्नोत्तराणि

उ०—स्तवीति—स्तुत्यर्थकास्तु धातोर्लट् लकारे तिप्प्रत्ययेऽनुबन्धनलोपे "तिङ्शित्सार्वधातुकम्" इति सार्वधातुसञ्ज्ञायां कर्त्तरि शपित्यनेन शप् प्रत्ययेऽदादित्वाद् "अदिप्रभृतिभ्यः शपः" इत्यनेन शपोलुकि "तुरुस्तु-शम्यमः सार्वधातुके" इति सूत्रेण पाक्षिके ईटि अनुबन्धलोपे "सार्वधातुकार्ध-धातुकयोः" इति गुणेऽवादेशे च कृते स्तवीति इति सिध्यति तदभावे स्तौति इति रूपं सिध्यति ।

ऊर्णुनाव—ऊर्णु धातोर्लिटि तिपि णलि च कृते "इजादेश्च गुरुमतोऽनृ-च्छः" इत्यनेन आम् प्रत्यये प्राप्ते 'ऊर्णोतेराम्नेति वाच्यम्' इति वार्तिकेन निषेधे-अजादेर्द्वितीयस्येति सहकारेण "लिटिधातोरनभ्यासस्य" इत्यनेन र्णु, इत्यस्य द्वित्वे प्राप्ते "नन्द्राः संयोगादयः" इत्यनेन रेफस्य द्वित्व निषेधे णत्व-स्यासिद्धतया "उभौ साभ्यासस्य" इति लिङ्गात् 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्य-स्यानित्यत्वज्ञापनेन च नुशब्दस्यैव द्वित्वे नकारस्य "रषाभ्यां नो णः समान-पदे" इत्यनेन णत्वे "अचोञ्णिति" इति वृद्धौ "एचोऽयवायावः" इत्यने-नावादेशे च कृते 'ऊर्णुनाव' इति सिद्धम् ।

अध्यगीष्ट—अधिपूर्वादिङ्धातो लुंङि लकारे प्रथमपुरुषैकवचने धातोर्ङित्वात् "अनुदात्तङिदात्मनेपदम्" इत्यनेनात्मनेपदे तप्रत्यये "विभाषालुङ्लृङोः" इत्यनेन विकल्पेन गाङादेशेऽनुबन्धलोपे लुङ्लङीत्यडागमे च्लिलुङीति च्लौ "च्लेः

सिच्" इत्यनेन सिचि चानुबन्धलोपे अधि अ गा स् त इति जाते "गाङ्कुटादि-भ्योऽञ्णिन्ङित्" इत्यनेन सिचो ङित्वेन "घुमास्थागापाजहातिसां हलि" इत्यनेन धातोराकारस्येकारादेशे यणि च कृते आदेश इति सिचः सकारस्य षत्वे तकारस्य ष्टुत्वेन टकारे अध्यगीष्ट इति सिद्धम् ।

विदाङ्करोतु—ज्ञानार्थकात् विद्धातो लोंटलकारे तिपि सार्वधातुकसञ्ज्ञायां शपि तस्य च "अदि प्रभृतिभ्यः शपः" इत्यनेन शपो लुकि "विदाङ्कुर्वन्त्वि-त्यन्यतरस्याम्" इत्यनेन वेत्तेर्लोटयाम् , गुणाभावो, लोटो लुक् लोडन्तकरोत्य-नुप्रयोगश्चेति वा निपात्यते–पुरुषवचने न विवक्षिते । ततः "तनादिकृ-ञ्भ्यः उः" इत्यनेन उप्रत्यये "सार्वधातुकार्धधातुकयोः"इति गुणे "परः" इत्यनेनेकारस्योकारे विदाङ्करोतु इति सिध्यति ।

एधि–भुवीत्यर्थकात् अस् धातो लोंटलकारे मध्यमपुरुषैकवचने सिपि सार्वधा-तुकसञ्ज्ञायां शपि प्रत्यये शपोलुकि च कृते "सेर्ह्यपिच्च" इति सेर्हि भावे "घ्वसोरेद्धावभ्यासलोपश्च" इत्यनेन सकारस्य एत्वे "हुझल्भ्यो हेर्धिः" इत्यनेन धिभावे च प्राप्ते किन्तु तत्राभीयत्वेनैत्वस्यासिद्धत्वात् हेर्धिभावे ततो एत्वे च "श्नसोरल्लोपः" इत्यल्लोपे एधि—इति सिध्यति ।

सधि—सस् धातो लोंट्लकारे सिपि सार्वधातुकसञ्ज्ञायां सेर्हिभावे सस् हि इति स्थिते "हुझल्भ्यो हेर्धिः" इत्यनेन हेर्धिभावे "धिच" इत्यनेन सकार-लोपे सधि इति सिध्यति ।

नन्वत्र धीत्यस्य स्थानिवद्भावेन हित्वात् "अतो हेः" इति सूत्रेण लुक् तु न शङ्कनीयः । पूर्वत्रासिद्धमिति सलोपस्यासिद्धत्वेनातः परत्वाभावादिति दिक् ।

## ६—प्रश्नोत्तराणि

उ०—वर्तमानकालैकत्वसङ्ख्याकर्तारश्चेति त्रयः भवतिघटकतिप्प्रत्ययार्थत्वेन विवक्षिताः ।

उ०—'वाक्यार्थाभिनयो नाटयम्' पदार्थाभिनयो नृत्यमिति ।

क्रादिनियमान्नित्येड्विधानेन—उवोष्ठ इति रूपमसाधु । साधु च–उवोषिथ इति । परिपूर्वात्सहतेः "परिनिविभ्यः" इत्यादिना षत्वविधानात् परिसहते इति रूपमसाधु । परिषहते इति च साधु ।

भौवादिकस्य पुष् धातोः अपोषोत् इति रूपं साध्वेव अङ्विधौ दैवादिकस्य ग्रहणादङोऽभावात्। अनिट्केषु च पुष्य इति श्यनानिर्देशादत्रेट् अनिटकत्वाभावाच्क्सः। अनिट्कारिकासु दैवादिकस्यैव श्लिषधातोर्ग्रहणात्। भौवादिकस्य च श्लिषधातोः श्लेषिता इति रूपं युक्तम्।

---

१९२७

१ पत्रम्

१—पूर्ववार्षिकः, सौदामनी, शाकलः, पिष्टकः, पयस्यम्, समर्थविभक्ति प्रत्ययतदर्थनिर्देशेन सिद्धिं प्रदर्शयत।

२—सैन्याः, सर्वीयम्, यवापूप्यम्, पञ्चकः, आपटवम्, सामयिकम्, अत्र प्रत्ययास्तदर्थाश्च निर्देश्याः।

३—अंशकः, दाण्डाजिनिकः, चर्मवती, वातूलः, यदा, अत्र विशेषकार्याणि दर्शनीयानि।

४—वाचिकः, षड्किः आकुलिकः, शुचीभवति, दुःखाकरोति, साधनिका लेख्याऽत्र।

५—पटुपट्वी, द्वन्द्वम्, अत्रत्यविशेषकार्याणि प्रदर्श्य कर्मधारयवदुत्तरेषु, इति सूत्राभिप्रायः सोदाहरणो वर्णनीयः।

६—श्रविष्ठे लुग्विधायकम्, मूल्ये यद्विधायकम्, अपतित्वे भावप्रत्ययान्तरनिषेधकम्, पूर्वेद्युः अत्र प्रत्ययनिपातकञ्च सूत्रमविकलं लिख।

## १—प्रश्नोत्तराणि।

उ०—पूर्ववार्षिकः—ऋतावर्थे वर्षा शब्दो नित्यस्त्रीलिङ्गो बहुवचनान्तः। तत्र वर्षाणां पूर्वं पूर्ववर्षाः। "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इति सूत्रेण समासे ततः जातार्थे "वर्षाभ्यष्ठक्" इत्यनेन ठकि—अनुबन्धलोपे ठस्येकादेशे "अवयवादृतोः" इत्यनेन वर्षशब्दस्य चादिवृद्धौ, इयं चोत्तरपदवृद्धिः 'सत्यपि सम्भवे' इति न्यायेन हि पूर्वपदवृद्धेः बाधिका, अत एव "द्वन्द्वगसिन्ध्वन्ते पूर्वपदस्य च" इति चारितार्थम्। तद्धितान्तत्वात् प्रातिपदिकसञ्ज्ञायां सौ रुत्वविसर्गे च कृते पूर्ववार्षिकः इति साधुः।

पूर्वासु वर्षासु भव इत्यर्थे च "तद्धितार्थोत्तरपदसमहारे च" इत्यनेन समासे ततो "कालाट्ठञ्" इत्यनेन ठञि अनुबन्धलोपे ञित्वाच्चादि वृद्धौ पौर्ववार्षिकः इति सिध्यति ।

अत्र पूर्वासु वर्षासु सामानाधिकरण्यनिर्देशात् अवयवत्वाभावात् "ऋतोर्वृद्धि-मद्विधावयवानाम्" इति वाचनिकस्तदन्तविधिस्तु न भवति, अतो "वर्षाभ्य-ष्ठक्" इति ठक् उत्तरपदवृद्धिश्च न भवतः ।

सौदामनी । सुदाम्ना अद्रिणा एकदिक् इत्यर्थे सुदामन् शब्दात् "तेनैक-दिक्" इति सूत्रेणाण् प्रत्ययेऽनुबन्धलोपे "तद्धितेष्वचामादेः" इत्यनेनादि वृद्धौ "नस्तद्धिते" इत्यनेन टिलोपे प्राप्ते "अन्" इति सूत्रेण प्रकृतिभावेन टिलोपप्रतिषेधे "टिड्ढाणञ्" इत्यादिना ङीपि प्रातिपदिकत्वात् सौ "हल्ङ्या-भ्योदीर्घात्" इत्यादिना सो र्लोपे सौदामनी विद्युत् इति सिध्यति ।

शाकलः—शकलेन प्रोक्तमधीयत इत्यर्थे तृतीयान्तात् शकलशब्दात् प्रोक्तार्थेऽणन्तादध्येतृप्रत्ययस्य लुकि शाकलशब्दात् तेषां सङ्घोऽङ्कोघोषोवेत्यर्थे "शाकलाद्वा" इति सूत्रेण वुञोऽपवादेऽणि तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च कृते शाकलः इति रूपं साधु ।

पिष्टकः—पिष्टस्य विकार इति विग्रहे षष्ठयन्तात् पिष्टशब्दात् "सञ्ज्ञायां कन्" इति कनि अनुबन्धलोपे प्रातिपदिकसञ्ज्ञायां सौ रुत्वे विसर्गे च पिष्टकः इति साधुः ।

पयस्यम् । पयसो विकार इति विग्रहे षष्ठयन्तात् पयः शब्दात् "गोपय-सोर्यत्" इत्यनेन यत्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात् सौ सोरमादेशे पय-स्यमिति सिद्धम् ।

## २—प्रश्नोत्तराणि

उ०—सैन्याः—सेनायां समवेता इत्यर्थे "सेनाया वा" इति सूत्रेण ण्य-प्रत्यये अनुबन्धलोपे णित्वादादिवृद्धौ प्रातिपदिकसञ्ज्ञायां जसि विभक्तौ जकारस्ये-त्संज्ञायां सस्य रुत्वे विसर्गे च कृते सैन्याः इति रूपं साधु ।

सर्वीयम्—सर्वस्मै हितमिति विग्रहे "त्यदादीनि च" इत्यनेन वृद्ध संज्ञायां "वृद्धाच्छः" इत्यनेन छ प्रत्यये आयनेयीत्यादिना छस्येयादेशे प्रातिपदिकसंज्ञायां सौ सोरमादेशे सर्वीयमिति सिध्यति ।

**यवापूप्यम्**—अपूपेभ्यो हितं चूर्णमित्यर्थे "**असमासेनिष्कादिभ्यः**" इति सूत्रेऽसमासग्रहणात् "इतः प्राक्तदन्तविधि"रिति ज्ञापनात् अपूपान्तत्वात् यवापूपशब्दात "**विभाषाहविरपूपादिभ्यः**" इति सूत्रेण यत् प्रत्ययेऽनुबन्ध-लोपे प्रातिपदिकसंज्ञायां सोरमादेश यवापूप्यमिति सिद्धम् ।

**पञ्चकः**—पञ्चभिः क्रीत इति विग्रहे "**संख्याया अतिशदन्तायाः कन्**" इति सूत्रेण कन् प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च कृते पञ्चकः इति साधुः ।

**आपटवम्**—नास्य पटवः सन्तीत्यपटुस्तस्य भाव इत्यर्थे "**इगन्ताच्च लघुपूर्वात्**" इत्यादिनाणप्रत्ययेऽनुबन्धलोपे णित्वादादिवृद्धौ "**ओर्गुणः**" इति गुणे-ऽवादेशे च प्रातिपदिकसंज्ञायां सौ सोरमादेशे—**आपटवमिति** सिध्यति ।

**सामयिकम्**—समयः प्राप्तोऽस्येति विग्रहे "**समयस्तदस्य प्राप्तम्**" इत्य-नेन ठञ् प्रत्ययेऽनुबन्धलोपे ञित्वादादिवृद्धौ ठस्येकादेशे प्रातिपदिकत्वात् सौ सोर-मादेशे **सामयिकमिति** सिध्यति ।

## ३-प्रश्नोत्तराणि

उ०—**अंशकः**—अंशं हारीत्यर्थेऽशशब्दात् "**अंशं हारी**" इति कन् प्रत्यये सति अंशकः इति ।

**दाण्डाजिनिकः**—दण्डाजिनं दम्भस्तेनान्विच्छतीत्यर्थे दण्डाजिन् शब्दात् "**अयः शूलदण्डाजिनाभ्यां ठक्ठञौ**" इति सूत्रेण ठञ् प्रत्ययेऽनुबन्धलोपे ठस्येकादेशे ञित्वादादिवृद्धौ प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **दाण्डाजिनिकः** इति साधु ।

**चर्मवती**—"**आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती**"-इतिसूत्रे संज्ञायामर्थे चर्मण्वतीति निपात्यते । तेन तदन्यत्र चर्मन् शब्दात् मतुपि प्रत्यये मादुपधायाश्चेति मकारस्य वकारे "**नलोपः प्रातिपदिकान्तस्य**" इति सूत्रेण न लोपे कृते तु—**चर्मवतीति** रूपं सिध्यति ।

**वातूलः**—वातं न सहते वातस्य समूह इति विग्रहे वा वातशब्दात् "**वाता-त्समूहे च**" इत्यनेन ऊलच् प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात सौ रुत्वे विसर्गे च **वातूलः** इति सिध्यति ।

**यदा**—यस्मिन् काले इति विग्रहे यच्छब्दात् "**सर्वैकान्यकिंयत्तदः**

काले दा" इति सूत्रेण दा प्रत्यये तस्य च विभक्तिसंज्ञायां "त्यदादीनामः" इत्यत्वे प्रातिपदिकत्वात् सौ सोर्लोपे यदा इति सिध्यति ।

## ४-प्रश्नोत्तराणि

वाचिकः—१४ पृष्ठे द्रष्टव्यम् ।

षडिकः—अनुकम्पितः षडङ्गुलिदत्त इति विग्रहे "बह्वचोमनुष्यनाम्नष्ठज्वा" इति सूत्रेण ठचि अनुबन्धलोपे "ठस्येकः" इति सूत्रेणेकादेशे "एकाक्षर पूर्वपदानामुत्तरपदलोपो वक्तव्यः" इति वार्तिकेनोत्तरपदस्य लोपे कृते पदत्वाज्जश्त्वे प्रातिपदिकत्वात् सौ रुत्वविसर्गे च षडिक इति सिध्यति ।

नन्वत्रेकप्रत्ययाश्रितभत्वेन पदत्वबाधाज्जश्त्वं कथमिति चेदत्रोच्यते—"षषष्ठाजादिवचनात्सिद्धम्" इति अयम्भावः—षष् शब्दस्य पूर्वपदत्वेऽपि ठाजादाविति सूत्रसिद्धो द्वितीयादचः उर्ध्वस्यैव गुलिदत्त शब्दस्य लोपेन डकाराकारस्य "यस्येति च" इति लोपे सति तस्य स्थानिवद्भावेन भसञ्ज्ञां प्रत्यकारान्तमेतत्, पदसञ्ज्ञाम्प्रतितु षकारान्तमिति विषयभेदात् भपदसञ्ज्ञयोः परस्परं बाधाभावेन षकारान्तस्य पदत्वाज्जश्त्वं सिद्ध्यतीति भावः ।

आङ्गुलिकः—अङ्गुलीवेति विग्रहे कृदिकारान्तङीषन्तादङ्गुलीशब्दात् "अङ्गुल्यादिभ्यष्ठक्" इत्यनेन ठकि अनुबन्धलोपे ठस्येकादेशे कित्वात् "किति च" इत्यनेनादिवृद्धौ भसञ्ज्ञायां "यस्येति च" इतीकारलोपे प्रातिपदिकत्वात्सौ रुत्वेविसर्गे च कृते आङ्गुलिक इतिरूपं सिध्यति ।

शुचीभवति—न शुचिरित्यशुचिः अशुचिश्शुचिर्विधते सम्पद्यमाना वेत्यर्थे "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" इति सूत्रेण च्विप्रत्यये तस्य सर्वापहारी लोपे "अस्य च्वौ" इति सूत्रेणाकारस्य दीर्घेकारे प्रातिपदिकत्वात्सौ सोर्लोपे शुचीभवति इति ।

दुःखाकरोति—दुःखं (दुःखितं) करोतीत्यर्थे दुःखशब्दात् "दुःखात्प्रातिलोम्ये" इति सूत्रेण डाचिप्रत्यये डित्वसामर्थ्याट्टिलोपे दुःखाकरोतीति सिद्धम् ।

## ५—प्रश्नोत्तराणि

उ०—पटुपटूवी—पट्वप्रकारेत्यर्थे पट्वीशब्दस्य "प्रकारे गुणवचनस्य" इत्यनेन द्वित्वे ऽनेनैव सूत्रेण कर्मधारयवद्भावे च कृते "पुंवत्कर्मधारयजातीयदे-

शीयेषु" इत्यनेन पूर्वभागस्य पुंवद्भावे प्रातिपदिकत्वात्सौ सोर्लोपे च कृते पटुप-टूवीति सिध्यति ।

द्वन्द्वम्—द्वौ द्वौ भूत्वा मन्त्रयते इत्यर्थे "द्वन्द्वंरहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" इति सूत्रेण द्वौ द्वौ इति द्वित्वे कर्मधारयवत्वात् सुब्लुकि समुदायात्पुनः सुपि पूर्वपदावयवस्यैकारस्यामिति मकारान्तादेश इत्यर्थः उत्तरपदावयवस्य चाकारोऽन्तादेश इत्यर्थः । न च त्यदाद्यत्वमुत्तरपदान्तस्य सिद्धमिति वाच्यम् । सञ्ज्ञात्वात्तदप्राप्तेरित्याहुः । नपुंसकत्वं चेति । चकारः अनुक्तसमुच्चये । कृतद्वित्वस्य नपुंसकत्वं द्विर्वचनाभावश्चेति । चकारादेकवद्भाव इत्यपि बोध्यम् । तेन "अतोऽम्" इत्यमादेशे द्वन्द्वमिति सिध्यति ।

"कर्मधारयवदुत्तरेषु"—इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यं स्यादिति तदर्थः । तत्प्रयोजनानि सुब्लोपपुंवद्भावान्तोदात्तानीति । पूर्वपदप्रकृतिस्वरश्चेति । यथा—पटुपट्वी । पटुसदृशः पटुपटुः । "कर्मधारयवदुत्तरेषु" इत्यधिकारात्प्रकारेगुणवचनस्येत्यनेन द्वित्वे तस्य च कर्मधारयवद्भावे पूर्वभागस्य पुंवद्भावः समासस्येत्यन्तोदात्तत्वञ्च ।

नन्वनुदात्तंचेत्यधिकारादन्तोदात्तस्य स्वतःसिद्धत्वात् कृतं तत्फलमिति वाच्यम् । तन्न । "अनुदात्तं च" इत्यधिकृतमपि भाष्यप्रामाण्यान्न सम्बध्यते । तथा च पटवीशब्दस्य द्विर्वचने कर्मधारयवत्वात्पुंवत्कर्मधारयेत्यादिना—पूर्वखण्डस्य पुंवत्वे रूपमिति भावः । यद्यपि बहुव्रीहिवत्वेऽपि स्त्रियाः पुंवदिति पुंवत्वादिदं सिद्धम् । तथापि कालककालिकेत्यादिकोपधादिष्वपि पुंवत्वार्थं कर्मधारयवदितिवचनमिति भावः ।

## ६—प्रश्नोत्तराणि

उ०—श्रविष्ठा—"श्रविष्ठाफल्गुन्यनुराधास्वातीतिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्" । एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यादिति तदर्थः ।

मूल्यमिति—"नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु" इत्यनेन यत्प्रत्ययः ।

अपतित्वम्—पतेर्भावः कर्म वा पतित्वम् । नपतित्वमपतित्वम् । इह "पत्य-

न्तपुरोहितादिभ्यो यक्" इति यक् न भवति। "ननञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्य" इत्यनेन निषेधात् किन्तुत्वप्रत्यय एव।

पूर्वेद्युः—"सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्यु"इत्यनेन पूर्वस्मिन्नहनि इत्यर्थे पूर्वेद्युर्निपात्यते।

---

१९२७

२ पत्रम्।

१—पुगन्तलघूपधस्येति सूत्रेऽनुवृत्तसार्वधातुकार्धधातुकयोरिति कस्य विशेषणमित्युपपाद्य बभूविथ, प्रभवाणि, ऊर्दाञ्चक्रे, अतायिष्ट, एते साधु साधनीयाः।

२—तिप्सीष्ट, चक्षणवहे, अचकमत, दुलयते, धिनु, जघृत्ते, अक्ष्णुतः, एतान्संसाध्य 'इन्दाञ्चकार' इत्यत्र कुतो न तङिति साधु वदत।

३—राधिता, चक्लृप्से, अश्वयतत्, परिसोढा, सीदति, गोढा, अदिथाः, एतेषां सूत्रार्थोपन्यासमुखेन साधुत्वं प्रदर्श्य घटयति, विघटयति, इत्युभयोपन्यासे को हेतुरिति सविवेकमुच्यताम्।

४—आरुः, निष्टपति, दद्रष्ठ, परिष्वजते, तितिक्षते, अधाक्षीत्, अवाप्तुः, एतान् सुसाध्य श्वयतेर्लुङि तिपि रूपाणि वदत।

५—और्णाविष्टाम्, अभ्यष्टौत्, अध्यैष्ट, अभुः, अजागः, अरोदः, असत्, एतेषां साधुत्वमुक्त्वा, लः परस्मैपदमिति, सूत्रस्य निर्दोषार्थः क इति वदत।

## १—प्रश्नोत्तराणि

उ०—पुगन्तेति—ननु "पुगन्तलघूपधस्य च" इत्यत्रानुवर्त्तमानयोः "सार्वधातुकार्धधातुकयोः" इत्यस्याङ्गविशेषणत्वे सार्वधातुकार्धधातुकाव्यवहितपूर्वत्वविशिष्टपुगन्तलघूपधाङ्गावयवस्येको गुणो भवतीत्यर्थकरणे भिनत्तीत्यत्रापि गुणापत्तिः। तद्वारणाय तयोरिको विशेषणत्वे तु सार्वधातुकार्धधातुकाव्यवहित पूर्वत्वविशिष्टस्य पुगन्तलघूपधाङ्गावयवस्येको गुणो भवतीत्यर्थकरणे भेत्तेत्यत्रापीको गुणो न स्यात्। तकाररूपैकवर्णव्यवधानेन सार्वधातुकाव्यवहितत्वाभावादित्याशङ्क्य समाधत्ते 'येन-

नाव्यवधानं तेन व्यवहितेऽपि भवतीति' यद्वर्णकर्तृकव्यवधानशून्यत्वं न सम्भवति तद्वर्णव्यवधानेऽपि भवतीति तदर्थः । तथा च सूत्रसार्थक्यायैकवर्णव्यवधाने प्रवृत्तावपि सूत्रस्य चारितार्थ्येनानेकवर्णव्यवधानेऽप्रवृत्त्या भेत्तेत्यत्रगुणो जातः । भिनत्तीत्यादावनेकवर्णव्यवधाने तदभावश्च । अत्रप्रमाणन्तु । "दीधीवेवीटाम्" इत्यत्रेड्ग्रहणमेव । तथाहि अस्मिन्सूत्रे गुणाभावार्थमेवेटो ग्रहणम् । उक्तरीत्या गुणाभावोपपादनेन व्यर्थमेवेटो ग्रहणम्, ज्ञापितेतूक्तार्थे सर्वं समञ्जसमिति दिक् ।

बभूविथ—भू—इत्यस्य "भूवादयोधातवः" इत्यनेन धातुसञ्ज्ञायां धातुत्वात् "परोक्षेलिट्"इत्यनेन लिट् लकारे अनुबन्धलोपे सिप्प्रत्यये तस्य "परस्मैपदानाम्"इत्यादिना थलादेशेऽनुबन्धलोपे "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमेऽनुबन्धलोपे "भुवो वुग्लुङ्लिटोः" इत्यनेन वुगागमे उगावितो भूव इथ इति जाते "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे भूव भूव इथ इति स्थिते "पूर्वोऽभ्यासः" इत्यनेनाभ्याससञ्ज्ञायां "हलादिःशेषः" इत्यनेनाभ्यासस्यादिहल्शेषे कृतेऽन्यस्यलोपे च "ह्रस्वः" इत्यनेन ह्रस्वे "भवतेरः" इत्यनेनाभ्यासोकारस्याकारे "अभ्यासे चर्च" इत्यनेनान्तरतम्यात् झलांजशत्वे "असिद्धवद्त्राभात्" इत्यनेन वुकोऽसिद्धत्वादुवङि प्राप्ते "वुग्युटावुवड्यणोः सिद्धौवक्तव्यौ" इतिवार्तिकेनासिद्धत्वाभावे बभूविथ इति सिध्यति ।

प्रभवाणि—प्रपूर्वात्भवते र्लोटो मिप्प्रत्यये ऽनुबन्धलोपे तस्य "मेर्निः" इत्यनेन निभावे सार्वधातुकसञ्ज्ञायां "कर्त्तरि शप्" इत्यनेन शपि सार्वधातुकेति गुणेऽवादेशे च "आडुत्तमस्य पिच्च" इत्यनेनाडागमे अनुबन्धलोपे "आनिलोट्" इत्यनेन नकारस्य णत्वे प्रभवाणीति रूपं साधु ।

ऊर्दाञ्चक्रे—ऊर्दधातोर्लिटि"इजादेश्चगुरुमतोऽनृच्छः" इत्यनेनामि "उपधायां च" इत्यनेन दीर्घे "आमः" इत्यनेन लिटो लुकि"कृञ्चानुप्रयुज्यते लिटि" इत्यनेन लिट्परकस्य कृञोऽनुप्रयोगे "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इत्यात्मनेपदे "लिटस्तझयोरेशिरेच्" इत्येशादेशे "असंयोगाल्लिट्कित्" इत्यनेन लिटः कित्वेन सार्वधातुकेति प्राप्तगुणस्य निषेधे द्वित्वात्परत्वाद्यणिप्राप्ते "द्विर्वचनेऽचि" इत्यनेन पूर्वंदित्वेऽभ्याससञ्ज्ञायां उरदित्यत्वे रपरत्वे च "हलादिःशेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेनाभ्यासस्य चुत्वे मकारस्यानुस्वारे परसवर्णे च कृते यणादेशे च ऊर्दाञ्चक्रे इति सिध्यति ।

अतायिष्ट—तायृधातो र्लुङ्लकारे आत्मनेपदित्वात्तप्रत्यये लुङ्लङित्यडागमे "च्लिलुङि" इत्यनेन च्लौ "दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्" इत्यादिना चिणो वैकल्पिकत्वेन तदभावे "च्लेः सिच्" इत्यनेन सिजादेशे अनुबन्धलोपे "आर्धधातुकस्येड्वलादेः" इतीडागमे सकारस्य "आदेशः प्रत्यययोः" इति षत्वे तकारस्य ष्टुत्वेन टकारे अतायिष्ट इति रूपं सिद्धम् ।

## २—प्रश्नोत्तराणि

तिप्सीष्ट—तिप्धातोराशिर्लिङि आत्मनेपदे त प्रत्यये "लिङः सीयुट्" इति सीयुटि अनुबन्धलोपे "सुट्तिथोः" इत्यनेन सुटि पुगन्तेत्यादिना लघूपधगुणे प्राप्ते "लिङ्सिचावात्मने पदेषु" इत्यनेन कित्वाल्लघूपधगुणनिषेधे "आदेशः प्रत्यययोः" इत्यनेन षत्वे ष्टुत्वे च तिप्सीष्ट इति सिद्धम् ।

चक्षण्वहे—क्षमूष् सहने इत्यस्माद्धातो र्लिट्लकारे तस्य स्थाने आत्मनेपदसंज्ञक वहि प्रत्यये कृते क्षम् वहि इति स्थिते "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे चकारे ऊदित्वादभ्याससञ्ज्ञायां "हलादिःशेषः" इत्यनेन लोपे "कुहोश्चुः" इति ककारस्य "स्वरति सूतिसूयतिधूञूदितो वा" इत्यनेन वैकल्पिकेडागमे "म्वोश्च" इत्यनेन धातोर्मकारस्य नकारे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इत्यनेन णत्वे च कृते "टित आत्मने पदानां टेरे" इत्यादिनैत्वे चक्षण्वह इति साधु ।

अचकमत्—कम्धातो र्लुङि विवक्षिते "आयादय आर्धधातुके वा" इत्यनेन आर्धधातुकविवक्षायां णिङ्प्रत्ययस्य वैकल्पिकत्वात् तदभावे लुङि तत्स्थाने त प्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्त" इत्यनेनाडागमे च्लिलुङीति च्लौ 'कमेश्च्लेश्चङ्वक्तव्यः' इति वार्तिकेन च्लेश्चङि "चङि" इत्यनेन द्वित्वेऽभ्याससञ्ज्ञायां "हलादिःशेषः" इत्यनेनाभ्यासस्य लोपे "कुहोश्चु" इत्यनेनाभ्यासस्य चुत्वे अचकमत इति रूपम् । अत्र णेरभावाद्दीर्घोलघोरित्यभ्यासलघोर्दीर्घो न भवति । चङ्परेणावेव तद्विधानात् । अत एव सन्वद्भावात् "सन्यतः" इत्यनेनाभ्यसाकारस्येत्वं न भवतीति ।

दुलयते—दुरपूर्वादयधातोर्लटलकारे आत्मनेपदे त प्रत्यये सार्वधातुकसञ्ज्ञायां "कर्त्तरि शप्" इत्यनेन शपि शपावितौ "टित आत्मनेपदानां टेरे"

इत्यनेन टेरेत्वे "उपसर्गस्यायतौ" इतिसूत्रेण रेफस्य लत्वे च कृते ढुलयते इति सिद्धम् ।

धिनु—धिवि धातोरिकारस्येत्संज्ञायाम् धातोरिदित्वान्नुमि उभावितौ लोटलकारे मध्यमपुरुषैकवचने सिप्प्रत्यये अनुबन्धलोपे लोटःस्थाने "सेर्ह्यपिच्च" इत्यनेन ह्यादेशे तस्य चापित्त्वे "धिन्विकृण्व्योरच्" इत्यनेन उप्रत्यये वकारस्यादादेशेऽतोलोपे च कृते हेर्ङित्वादुकारस्य गुणाभावे "उतश्चप्रत्ययादसंयोगपूर्वात्" इत्यनेन हेर्लुकि धिनु इति सिद्धम् ।

जघृक्षे—भौवादिकाद् गृहूग्रहणे इत्यस्माद्धातो लिटलकारे आत्मनेपदे थासि "थासः से" इत्यनेन थासः से कृते धातोरुदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन इटो वैकल्पिकत्वेन तदभावपक्षे "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससञ्ज्ञायाम् अभ्यासस्य "उरत्" इत्यत्वे "हलादिःशेषः" इत्यनेन लोपे "कुहोश्चुः" इति चुत्वेन जकारे च "होढः" इत्यनेन हकारस्य ढत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावे "षढोः कः सि" इति ढकारस्य कत्वे सकारस्य षत्वे संयोगे च कृते जघृक्ष इति सिद्धम् ।

अक्ष्णुतः—अक्ष् धातोर्लट् लकारे तस्प्रत्यये "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायां "कर्त्तरि शप्" इत्यनेन शपि प्राप्ते "अक्षोऽन्यतरस्याम्" इत्यनेन श्नु प्रत्यये तसोङित्वेन श्नोरुकारस्य गुणाभावे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति नकारस्य णकारे सकारस्य रुत्वे विसर्गे च कृते अक्ष्णुतः इति सिद्धम् ।

इन्दाञ्चकार—इदि परमैश्वर्ये इत्यस्माद्धातो रिदित्वान्नुमि चकृते लिट्लकारे तिप् प्रत्यये "इजादेश्च गुरुमतोऽनृच्छः" इत्यनेनाम् "आमः" इत्यनेन लिटो लुकि—"कृञ्चानुप्रयुज्यते लिटि" इत्यनेन पुनः कृञनुप्रयोगे लिट्प्रयोगे च लिटिधातोरित्यनेन कृ इत्यस्य द्वित्वेऽभ्यासंसंज्ञायां उरदत्वे "हलादिःशेषः" इत्यनेन लोपे "कुहोश्चुः" इति चुत्वे वृद्धौ इन्दाञ्चकार इति सिध्यति ।

नन्विन्दाञ्चकार इत्यादौ आम्प्रत्ययवदित्यात्मनेपदं कुतो नेति चेन्न । तस्य परगामिनि क्रियाफले एवात्मनेपदविधानेन इदिपरमैश्वर्ये इति धातोः परस्मैपदित्वेनात्मनेपदाभावात् । आत्मगामिनि क्रियाफले तु—"स्वरितञितः" इत्यात्मनेपदं दुर्वारमेव । अस्य सूत्रस्य एधाञ्चक्र इत्यादौ परगामिनि क्रियाफले आत्मने पदस्या-

प्राप्तस्य विधान एव समर्थतया तत्रात्मनेपदस्य निवारणे सामर्थ्याभावादिति प्रष्टु-राशयः । समाधत्ते—अस्मिन् सूत्रे "पूर्ववत्सनः" इति पूर्वसूत्रात् पूर्ववदित्यनुवर्त्य आमप्रत्ययवत्कृञोऽनुप्रयोगस्येत्येकं वाक्यम् । पूर्ववत्कृञोऽनुप्रयोगस्येति च द्वितीयं वाक्यम् । तत्र पूर्ववदिति तृतीयान्ताद्वतिः । पूर्वेण पूर्वप्रयुक्तेन एधादिधातुना तुल्य-मित्यर्थः । तत्र वाक्यद्वयस्यापि समानार्थकत्वे फलाभावाद् द्वितीयं वाक्यं नियमार्थं कल्प्यते—इहपूर्ववदेवात्मनेपदमिति नतु तद्विपरीतमिति । एवञ्च—पूर्ववाक्येन एधा-ञ्चक्रे इत्यादौ कर्त्रःपरगामिन्यपि क्रियाफले आत्मनेपदविधिः । द्वितीयवाक्येन तु—इन्दाञ्चकारेत्यादौ कर्तृगामिनि क्रियाफले स्वरितञित इत्यात्मनेपदस्य निवृत्तिमेव क्रियते ।

## ३—प्रश्नोत्तराणि ।

उ०—रोषिता—रुष धातो लुंटि लकारे तिपि प्रत्यये अनुबन्धलोपे "स्य-तासिलृलुटोः" इत्यनेन तास्प्रत्यये लुटःप्रथमस्येत्यनेन तिपोडादेशे डित्वात्ताश-ष्टिलोपे "तीषसहलुभरुषरिषः" इत्यनेन विकल्पेनेडागमे "पुगन्तलघूपधस्य च" इत्यनेन लघूपधगुणे रोषितेति सिद्धम् ।

चक्लृप्से—कृपू सामर्थ्ये इत्यस्माद्धातो लिंट्लकारे आत्मनेपदे थास्प्रत्यये "थासः से" इत्यनेन सेभावे लिटिधातोरनभ्यासस्येति द्वित्वेऽभ्याससंज्ञायामुर-दत्वे "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इति चुत्वे च कृते "कृपो रो लः" इति ऋकारवयवस्य रेफसदृशस्य लकारसदृशे कृते चक्लृप्से इति सिद्धम् ।

अश्वितत्—श्विता वर्णे इत्यस्माद्धातो लुंङि लकारे "द्युद्भ्यो लुङि" इत्य-नेन वैकल्पिकेन परस्मैपदे तिपि अनुबन्धलोपे लुङ्लङित्यडागमे "च्लिलुङि" इति च्लौ "पुषादिद्युताद्य्लृदितः परस्मैपदेषु" इत्यनेन च्लेरङि ङित्वाल्ल-घघगुणाभावे अश्वितत् इति सिध्यति ।

परिसोढा ७ पृष्ठे द्रष्टव्यम् ।

सीदति—षद्लृ विशरणगत्यावसादनेष्वित्यस्माद्धातो लंट्लकारे तिपि अनु-बन्धलोपे सार्वधातुकसंज्ञायां कर्तरिशबित्यनेन शपि पाघ्रेत्यादिना सदित्यस्यस्थाने सीदादेशे सीदतीति सिद्धम् ।

गोढा ६ पृष्ठे द्रष्टव्यम् ।

अदिथाः—देङ्रक्षणे इत्यस्माद्धातो लुंङ्लकारे ङित्वादात्मनेपदे थास्प्रत्यये

लुङ्लकीत्यडागमे "च्लिलुङि" इतिच्लौ तस्य "च्लेःसिच्" इत्यनेन सिच्प्रत्यये ऽनुबन्धलोपे "आदेच उपदेशेऽशिति" इत्यात्वे अदास् थास् इतिस्थिते "स्थाघ्वोरिच्च" इत्यनेन सिचःकित्वे धातोराकारस्येत्वे च कृते "ह्रस्वादङ्गात्" इति सिचो लोपे सकारस्य रुत्वे विसर्गे च कृते अदिथाः इति सिद्धम् ।

घटयति विघटयतीति—ये धातवोऽन्यत्राधीतास्तेषामत्र घटादौ पाठोऽर्थ नियमार्थः यथा 'दॄ' भये भयार्थे मित्संज्ञकोऽन्यार्थेतु न तत्र दारयतीत्येव येत्विहैव पठ्यन्ते तेषामुपसर्गबलेनार्थान्तरत्वेऽपि मित्वमस्त्येवेति धातुवृत्त्यादिषु स्थितं तद् ध्वनयन्नुदाहरति रूपद्वयमिति ।

## ४—प्रश्नोत्तराणि

उ०—आरुः—ऋगतावित्यस्माद्धातो लिंट्लकारे झि प्रत्यये तस्य स्थाने उसि कृते "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायामुरदित्यत्वे रपरे च कृते "हलादिःशेषः" इत्यनेन लोपे अऋ उस् इति जाते "अत आदेः" इत्यनेन दीर्घे कृते ऋकारस्य ऋच्छत्यृतामिति गुणे सवर्णदीर्घे सकारस्य रुत्वे विसर्गे च कृते आरुरिति सिद्धम् ।

निष्टपति—निसुपसर्गपूर्वकात्तपसन्तापे इत्यस्माद्धातोः लट्लकारे तिप्सझी-त्यादीना तिप्प्रत्ययेऽनुबन्धलोपे "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायां "कर्त्तरिशप्" इत्यनेन शपि शपावितौ "निसस्तपतावनासेवने" इत्यनेन षत्वे "ष्टुनाष्टुः" इत्यनेन ष्टुत्वे च कृते निष्टपति इति सिद्धम् ।

दद्रष्ठ—दृश्धातो लिंट्लकारे सिपि सिपो थलि च कृते अनुबन्धलोपे "लिटि-धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्याससंज्ञायाम् उरदित्यत्वे "हलादिःशेषः" इत्यनेन लोपे कृते "सृजिदृशोर्झल्यमकिति" इत्यनेनामागमेऽनुबन्धलोपे मित्वादकारात्परे यणि च कृते व्रश्चभ्रस्जेत्यादिना षत्वे ष्टुत्वे च कृते दद्रष्ठ इति सिद्ध्यति ।

परिष्वजते—परीत्युपसर्गपूर्वात्स्वञ्जधातो लंटलकारे आत्मनेपदे तप्रत्यये "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसञ्ज्ञायां कर्त्तरिशबित्यनेन शपि शपावितौ "दंशसञ्जस्वञ्जां शपि" इत्यनेन नलोपे "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे उपसर्गात्सुनोतीत्यादिना षत्वे परिष्वजते इति सिद्धम् ।

तितिक्षते—तिज्निशाने इत्यस्माद्धातोः "गुप्तिज्किद्भ्यः सन्" इत्यनेन

सनि "सन्यङोः" इति द्वित्वे पूर्वस्याभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन लोपे जस्य "चोःकुः" इति कुत्वेन गकारे "खरि च" इत्यनेन चर्त्वेन ककारे "आदेशप्रत्यययोः" इति सस्य षत्वे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां सन्नन्तादात्मनेपदे तप्रत्यये तितिक्षते इति सिद्धम् ।

अधाक्षीत्—दहभस्मीकरणे इत्यस्माद्धातो लुङि तिपि इकारपकारयो लोंपे लुङ्लङीत्यडागमे च्लिलुङीति च्लौ च्लेःसिजित्यनेन सिचि अनुबन्धलोपे "एकाच उपदेशेऽनुदात्तात्" इत्यनेनेटिनिषिद्धे अदहस् त् इति स्थिते "वदव्रजहलन्तस्याचः" इत्यनेन वृद्धौ "दादेर्धातोर्घः" इत्यनेन हकारस्य घकारे दकारस्य च "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इत्यनेन भष्भावेन धकारे घकारस्य जश्त्वेन गकारे तस्य खरिचेति चर्त्वेन ककारे सस्य षत्वे कषसंयोगे क्षकारे "अस्तिसिचोऽपृक्ते" इत्यनेनेटि कृतेऽनुबन्धलोपे अधाक्षीत् इति सिद्धम् ।

अवाक्षुः—वह प्रापणे इत्यस्माद्धातो लुङि तत्स्थाने झिप्रत्यये लुङ्लङीत्यडागमे च्लिलुङि इति च्लौ "च्लेःसिच्" इति सिजादेशे इचावितौ "सिजभ्यस्तविदिभ्यश्च" इत्यनेन झेर्जुसि "एकाच उपदेशेऽनुदात्तात्" इतीण्निषेधे "वदव्रजहलन्तस्याचः" इत्यनेन हलन्तलक्षणवृद्धौ "होढः" इति हस्य ढत्वे "षढोः कः सि" इत्यनेन ढस्य कत्वे च "आदेशप्रत्यययोः" इति सस्य षत्वे कषसंयोगे क्षकारे अवाक्षु रिति सिद्धम् ।

श्वयते लुङ्लकारे अश्वत्, अश्वयीत्, अशिश्वियत्, इति त्रीणि रूपाणि।

## ५ प्रश्नोत्तराणि

और्णुविष्टाम्——उर्णुञ् आच्छादने इत्यस्माद्धातोर्लुङ्लकारे परस्मैपदे तस् प्रत्यये तस्थसित्यादिना तामादेशे लुङ्लङीत्यडागमे प्राप्ते अजादित्वादाडागमे "आटश्च"इति वृद्धौ च्लिलुङीति च्लौ "च्लेःसिच्"इत्यनेन सिचि इचावितौ "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमे गुणेप्राप्ते "विभाषोर्णोः" इति पाक्षिक ङित्वेन गुणनिषेधे "अचिश्नुधातुभ्रुवांय्वोरियङुवङौ" इत्युवङि सकारस्य षत्वे तकारस्य च ष्टुत्वेन टकारे और्णुविष्टामिति साधु ।

अभ्यष्टौत्—अभिपूर्वाददादिकात् स्तुधातोर्लङि तिपि शपि शपोलुकि इकारलोपे लुङ्लङीत्यडागमे "तुरुस्तुशम्यमः सार्वधातुके" इत्यनेनेटो वैक-

त्पिकत्वेन तदभावे "उतोवृद्धिर्लुकि हलि" इत्यनेन वृद्धौ "प्राक्सितादड्व्य-वायेऽपि" इति सस्य षत्वे ष्टुत्वे च अभ्यष्टौत् इति सिद्धम् ।

अध्यैष्ट—अधिपूर्वादिङ् धातो र्लुङि तप्रत्यये 'विभाषालुङ्लृङोः' इत्यनेन इङोगाङादेशस्य वैकल्पिकत्वेन तदभावे अटि प्राप्ते आडागमे "च्लिलुङि" इति च्लौ "च्लेःसिच्" इत्यनेन सिजादेशे इचावितौ अधि आ इ स् त इति स्थिते "सार्वधातुकार्धधातुकयोः" इति गुणे "आटश्च" इत्यनेन वृद्धौ यणि षत्वे ष्टुत्वे च अध्यैष्ट इति सिद्धम् ।

अभुः—भा धातो र्लङि प्रथमपुरुषबहुवचने झिप्रत्यये सार्वधातुकसंज्ञायां कर्तरि-शपीत्यनेन शपि "अदि प्रभृतिभ्यः शपः" इति शपो लुकि लुङ्लङीत्यडागमे "लङः शाकटायनस्यैव" इत्यनेन झेर्जुसि "उस्यपदान्तात्" इतिपररूपे च सस्य रुत्वे विसर्गे च कृते अभुः, इति सिद्धम् ।

अजागः—जागृनिद्राक्षये इत्यस्माद्धातो र्लङि तिपि इकारपकारयो र्लोपे सार्व-धातुकसंज्ञायां शपि "अदि प्रभृतिभ्यः शपः" इति शपो लुकि लुङ्लङीत्यडागमे सार्वधातुकेति ऋकारस्य गुणे रपरत्वे "हलड्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल्" च इत्यनेन तकारलोपे रेफस्य विसर्गे च कृते अजागः इति साधु ।

अरोदः—रुद् धातो र्लङ्लकारे सिपि प्रत्यये इकारपकारयो र्लोपे सार्वधातुक-संज्ञायां कर्तरिशबित्यनेन शपि "अदिप्रभृतिभ्यः शपः" इति शपोलुकि "अड्गार्ग्यगालवयोः" इत्यनेनाडागमे उपधाया गुणे प्रत्ययसकारस्य रुत्वे विसर्गे कृते अरोदः इति सिद्धम् ।

असत्—सस् धातो र्लङ्लकारे तिपि इकारपकारयो र्लोपे सार्वधातुकसंज्ञायां "कर्त्तरि शप्" इत्यनेन शपि अदादित्वाद् "अदिप्रभृतिभ्यः शपः" इति शपो लुकि लुङ्लङीत्यडागमे असस् त् इति स्थिते "हलड्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन तकारलोपे "तिप्यनस्ते" इति सस्य दत्वे खरिचेति चर्त्वे च असत् इति सिद्धम् ।

"लः परस्मैपदम्" इति । ल इति स्थानषष्ठी, आदेश इत्यध्याहार्यम्, तथाच—लमात्रोद्देशेन विहिता आदेशा परस्मैपदसंज्ञाः स्युरिति सूत्रार्थः फलति-तदाह—लादेशाः परस्मैपदसंज्ञाः स्युरिति ।

---

१९२८

१ पत्रम् ।

१—युष्मदस्मदोः शैषिके कानि रूपाणि, कथञ्च तानि सिद्ध्यन्ति ।

२—कालापाः, कौपिञ्जलः, व्रीहिमयः, स्त्रागतिकः, कार्मः, श्वादंष्ट्रिः एतानि साधनीयानि ।

३—विश्वजनीनम्, पारायणिकः, द्विप्रतिकम्, ब्राह्मणवत्, प्रथिमा, आर्हन्ति । एतानि विशेषशास्त्रप्रदर्शनपुरस्सरं साधनीयानि ।

४—समांसमीना, शालीनः, तावान्, तमिस्रा, पुरः, गरिष्ठः, एते प्रयोगा विग्रहकार्यसूत्रविशेषप्रदर्शनपुरस्सरं साधनीयाः ।

५—द्लद्वये टाबभाव इति कारिका सोदाहरणं विशदं व्याख्येया ।

६—शेष इति सूत्रस्य लक्षणत्वमधिकारत्वञ्चसम्यगुपपाद्येताम् ।

## १—प्रश्नोत्तराणि

उ०—युष्मदस्मदोः शैषिके प्रत्यये—युष्मदीयः, अस्मदीयः यौष्माकीणः, आस्माकीनः, यौष्माकः, आस्माकः, तावकीनःतावकः, त्वदीयः मदीयः इति रूपाणि जायन्ते ।

तत्र युवयोरावयोरिति विग्रहे—युष्मदस्मदोः "युष्मदस्मदोरन्यतरस्यां खञ्च" इत्यनेन छ प्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यादिनेयादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च युष्मदीयः, अस्मदीयः, इति रूपे ।

युष्माकमस्माकं वेति-विग्रहे तु—"युष्मदस्मदोरन्यतरस्यां खञ्च"इत्यादिना खञि अनुबन्धलोपे "तस्मिन्नणि च युष्माकास्माकौ" इत्यनेन युष्माकास्माकादेशयोः खस्येनादेशे ञित्वादादिवृद्धौ "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च यौष्माकीणः, आस्माकीन इति रूपद्वयम् । अणि कृते "तस्मिन्नणि च युष्माकस्माकौ" इत्यनेन युष्माकास्माकादेशयोः कृतयोर्णित्वादादिवृद्धौ भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च यौष्माकः, आस्माकः, इति रूपे ।

तव मम वाऽयमिति विग्रहे पूर्वेणैव सूत्रेण खञि, अणि च कृते "तवकमम-

३

कावेकवचने" इति तवकममकादेशयोः आदिवृद्धौ खस्येनादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे तावकीनः, तावकः, मामकीनः, मामकः, इति रूपचतुष्टयम्। अस्मिन्नेव विग्रहे "युष्मदस्मदोरन्यतरस्यां खञ्च" इति सूत्रेण छ प्रत्यये "प्रत्ययोत्तरपदयोश्च" इति सूत्रेण च युष्मदस्मदोः त्व म इत्यादेशयोश्छस्येयादेशे विभक्तिपरकत्वाभावात् "शेषे लोप" इत्यस्याप्रवृत्तौ त्वदीयः, मदीयः, इति रूपे भवत इति शम्।

## २—प्रश्नोत्तराणि

उ०—कालापाः—१० पृष्ठे द्रष्टव्यम्।

**कौपिञ्जलः**—कुपिञ्जलस्यापत्यमित्यर्थे कुपिञ्जल शब्दात् "कौपिञ्जलहस्तिपदादण् वाच्यः" इति वार्तिके कौपिञ्जलेति निर्देशात्—"अत इञ्" इति सूत्रेण प्राप्तमिञम्बाधित्वादणि णित्वादादिवृद्धौ कौपिञ्जलस्येदमिदमित्यर्थेऽणणन्तात् कौपिञ्जलशब्दात् गोत्रार्थे प्राप्तवुञं प्रबाध्य कौपिञ्जलहास्तिपदादणित्यनेनाणि अनुबन्धलोपे भसंज्ञायां "यस्येति च" इत्यकारलोपे कौपिञ्जल इति सिध्यति।

**व्रीहिमयम्**—व्रीहेर्विकारः पुरोडाश इत्यर्थे व्रीहिशब्दात् "व्रीहेः पुरोडाशे" इति मयटि प्रातिपदिकत्वात् सौ सोरमादेशे व्रीहिमयमिति साधुः।

**स्वागतिकः**—स्वागतमित्याहेति विग्रहे "प्राग्वहतेष्ठक्" इति ठकि अनुबन्धलोपे "न य्वाभ्यां पदान्ताभ्यां पूर्वौतुताभ्यामैच्" इत्यनेनैजागमे प्राप्ते "स्वागतादीनां च" इति निषेधे ठस्येकादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् सौ रुत्वेविसर्गे च कृते स्वागतिकः इति रूपं सिध्यति।

**कार्मः**—कर्मशील इति विग्रहे कर्मन् शब्दात् "कार्मस्ताच्छील्ये" इति निपातनात् ण प्रत्यये टिलोपे च कृते अनुबन्धलोपे णित्वात् "तद्धितेष्वचामादेः" इत्यादि वृद्धौ न च "यचि भम्" इत्यनेन भसंज्ञायां "नस्तद्धिते" इत्यनेनैव टिलोपे प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च कार्मः इति साधुः स्यादि वाच्यम् ताच्छीलिकेणेऽपि भवत्यणकार्यमिति ज्ञापनफलकत्वात्।

**श्वादंष्ट्रिः**—श्वदंष्ट्रस्यापत्यमित्यर्थे श्वदंष्ट्र शब्दात् "अत इञ्" इत्यनेनेञ् प्रत्यये अनुबन्धलोपे "द्वारादीनां च" इत्यनेनैजागमे प्राप्ते "श्वादेरिञि" इत्यनेन तत्प्रतिषेधे "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धौ "कृत्तद्धितसमा-

साश्च" इत्यनेन प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते श्वादंष्ट्रिः इति साधुः ।

# ३ प्रश्नोत्तराणि

उ०—विश्वजनीनम्—विश्वे च ते जना इति विश्वजनास्तेभ्यो हितमित्यर्थे विश्वजनशब्दात् "आत्मन्विश्वजनभोगोत्तरपदात्खः" इति सूत्रेण ख प्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यनेनेनादेशे "यचि भम्" इति भसञ्ज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकसञ्ज्ञायां प्रातिपदिकत्वात्सौ सोरमादेशे विश्वजनीनमिति साधु ।

पारायणिकः—पारायणम् ( वेदाध्ययनम् ) वर्त्तयति—आवर्त्तयतीत्यर्थे पारायणशब्दात् "पारायणतुरायणचान्द्रायणं वर्त्तयति" इत्यनेन ठञि अनुबन्धलोपे ठस्येकादेशे "यचि भम्" इति भसञ्ज्ञायां "यस्येति च" इत्यकारलोपे ञित्वादादिवृद्धौ प्रातिपदिकसञ्ज्ञायां सौ रुत्वविसर्गे च पारायणिकः इति साधु ।

द्विप्रतिकम्—द्वाभ्यां कार्षापणाभ्यामितिविग्रहे "कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा" इत्यनेन वार्तिकेन टिठन् प्रत्यये "विभाषाकार्षापणसहस्राभ्याम्" इत्यनेन विकल्पेन लुकि तदभावे प्रतेरादेशे ठस्येकादेशे भसञ्ज्ञायां "यस्येति च" इतीकारलोपे प्रातिपदिकसञ्ज्ञायां सोरमादेशे द्विप्रतिकमिति साधु ।

ब्राह्मणवत्—ब्राह्मणेन तुल्यमधीते इति विग्रहे "तेन तुल्यं क्रियाचेद्वतिः" इत्यनेन वतिप्रत्यये इकारस्येत्सञ्ज्ञायां लोपे च कृते प्रातिपदिकसञ्ज्ञायां सौ सोर्लुकि ब्राह्मणवदिति सिद्धम् ।

प्रथिमा—पृथोर्भाव इति विग्रहे "पृथ्वादिभ्य इमनिज्वा" इत्यनेनेमनिच् प्रत्यये ऽनुबन्धलोपे "र ऋतो हलादेर्लघोः" इति ऋकारस्य रेफादेशे "टेः" इत्यनेन टिलोपे च कृते निष्पन्नात् प्रथिमन् शब्दात् प्रातिपदिकत्वात्सौ "सर्वनामस्थाने चासम्बुद्धौ" इत्यनेन दीर्घे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सुलोपे "नलोपः प्रातिपदिकान्तस्य" इत्यनेन नलोपे च कृते प्रथिमा इति सिध्यति ।

आर्हन्ती—अर्हतो भावः कर्म वेत्यर्थेऽर्हन् शब्दात् "अर्हतो नुम् च" इत्यनेन ष्यञि प्रकृतेर्नुमागमे च वृद्धौ निष्पन्नात् आर्हन्त्यशब्दात् ङीषि अनुबन्ध-

लोपे "यचि भम्" इति भसञ्ज्ञायां "यस्येति च" इतीकारलोपे "हलस्तद्धितस्य" इति सूत्रेण यलोपे च कृते प्रातिपदिकत्वात्सौ सोर्लोपे आर्हन्ती इति सिध्यति।

## ४ प्रश्नोत्तराणि

उ०—समांसमीना १३ पृष्ठे द्रष्टव्यम्।

शालीनः—शालाप्रवेशमर्हतीति विग्रहे शालाप्रवेशशब्दात् "शालीनकौपीने अधृष्टाकार्ययोः" इति निपातनात् खञि अनुबन्धलोपे प्रवेशशब्दस्य लोपे च कृते खस्य आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यनेनादेशे "यचि भम्" इति भसञ्ज्ञायां "यस्येति च" इत्याकारलोपे प्रातिपदिकसञ्ज्ञायां प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते शालीनः इति सिध्यति।

तावान्—तत्परिमाणमस्येत्यर्थे तच्छब्दात् "यत्तदेतेभ्यः परिमाणे वतुप्" इत्यनेन वतुपि अनुबन्धलोपे "आ सर्वनाम्नः" इति तकारस्यात्वे सवर्णदीर्घे च कृते प्रातिपदिकत्वात्सौ "अत्वसन्तस्य चाधातोः" इत्यनेन दीर्घे "उगिदचां सर्वनामस्थानेऽधातोः" इत्यनेन नुमि उमावितौ "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सोर्लोपे "संयोगान्तस्य लोपः" इत्यनेन तकारलोपे च तावान् इति इति सिध्यति।

तमिस्रा—तमोऽस्यास्तीति विग्रहे तमः शब्दात्—"ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः" इति सूत्रेण निपातनात् रप्रत्यये उपधाभूतमकारादकारस्येत्वे च प्रातिपदिकत्वात्सौ सोर्लोपे तमिस्रा इति सिद्ध्यति—

पुरः—पूर्वस्यां दिशि इत्याद्यर्थेषु पूर्वाशब्दात् "पूर्वाधरावराणामसि पुरधवश्चैषाम्" इत्यनेन असिप्रत्यये अनुबन्धलोपे पुरादेश च कृते प्रातिपदिकत्वात्सौ सो लोपे सकारस्य रुत्वविसर्गे च कृते पुरः इति सिध्यति।

गरिष्ठः—अतिशयेन गुरुरित्यर्थे "अतिशायने तमबिष्ठनौ" इत्यनेनेष्ठनि "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवबंहिगर्वर्षित्रपद्राघिवृन्दाः" इत्यनेन गरादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते गरिष्ठः इति साधुः।

# ५ प्रश्नोत्तराणि

उ०—"असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः" इतिवार्तिकेऽनुवृत्तस्य बाहुलकादितिपदस्य प्रयोजनकथनपरप्राचीनश्लोकमाह—"दलद्वये टाबभावः क्लीबे चादड्विरहः स्वमोः। समासे सोरलुक्चेति सिद्धं बाहुलकात्त्रयम्"। अयम्भावः— स्त्रीलिङ्गेष्वन्यपरेतरशब्देषु कर्मव्यतिहारे द्वित्वे सति दलद्वयेऽपि प्राप्तस्य टापो निवृत्तिरित्यर्थः। क्लीबे—अन्योऽन्यमित्यादौ अदड़ादेशविरह इत्यर्थः। समासे सोरिति—कृतद्वित्वस्य अन्येन समासे पूर्वखण्डस्थस्य सोरलुक्। तथाहि—अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि टाप्प्राप्तः स अनेन निवर्त्यते।

ननु पूर्वदले 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' इति वार्तिकेन पुंवत्वेनैव टाप् निवृत्तेः सिद्धत्वात् तद्विषये बहुलग्रहणं नादर्तव्यमित्याशंक्य निराकरोति। नच "सर्वनाम्नो वृत्तिमात्रे इति पुंवद्भावः"। अन्यपरयोरसमासवद्भावाच्च पुंवद्भाव इति। नच समासवच्च बहुलमिति समासवत्वम् अन्यपरयोरिति वाच्यम्। तस्य इतरशब्दमात्रविषयत्वात् नत्वन्यपरशब्दविषयमिति प्रागुक्तमित्यर्थः।

ननु मास्तु समासवत्वं तथापि 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्वं दुर्वारम्। द्विर्वचनस्य वृत्तित्वादित्याशंक्य निराकरोति। न च द्विर्वचनमेव वृत्तिः। "कृत्तद्धित-समासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः" इति परिगणनादिति भावः। द्विर्वचनस्य वृत्त्यन्तर्भावे बाधकमाह—यां यामिति। द्विर्वचनस्य वृत्त्यन्तर्भावे "यांयांप्रियः प्रैक्षत कातराक्षी सासा ह्रिया नम्रमुखी बभूव"। इत्यत्र श्लोके यां यामित्यत्र सासेत्यत्र च "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति पुंवत्वं स्यात्तच्च न भवतीति द्विर्वचनं न वृत्तिरिति। क्लीबेचाद्विरहः इत्यस्योदाहरति। अन्योन्यमितरेतरम् इत्यत्र च "अड्डुतरादिभ्यः पञ्चभ्यः" इत्यदड्प्राप्तः।

ननु समासे सोरलुक् चेति कथम्। अन्यपरशब्दयोः समासवत्वाभावादित्याशङ्क्य कृतद्वित्वस्यान्येन समासे पूर्वखण्डस्थस्य सोरलुगिति तदर्थमभिप्रेत्य तथैवोदाहरति—"अन्योन्यसंसक्तमहस्त्रियामम्" अन्योऽन्येन संसक्तमिति तृतीयासमासः। अहश्च त्रियामा चेति समाहारद्वन्द्वः। अहश्च रात्रिश्च अन्योऽन्येन संयुक्तमित्यर्थः। "अन्योऽन्याश्रयः" अन्योऽन्यस्य आश्रय इति षष्ठी समासः। परस्पराक्षिसादृश्यमिति। अक्ष्णा सादृश्यमक्षिसादृश्यम्। परस्परस्याक्षिसादृश्यमिति

विग्रहः । "अपरस्परैः" न परस्परे अपरस्परे तैरिति विग्रहे एषु कृतद्वित्वेषु समासावयवेषु पूर्वखण्डस्थस्य सुबादेशस्य सोर्लुक् प्राप्त इत्यर्थः । सुभावविधानं तु-अन्योन्यमित्यादावसमासे चरितार्थमिति भावः । इदं सर्वं बाहुलकेन समाधेयमिति ।

ननु बहुलग्रहणादेतत्समाधेयमित्यत्र किं प्रमाणमित्यत आह—प्रकृतवार्तिकभाष्योदाहरणम् । स्त्रीनपुंसकयोरिति प्रकृतवार्तिके अन्योन्यमिमे ब्राह्मण्याविति । इतरेतरमिमे कुले इति चोदाहरणात् "दलद्वये टाबभावः क्लीबेचाद्द्विरहः स्वमोः" इति विज्ञायते । स्त्रियामिति सूत्रे—'अन्योन्य संश्रयं त्वेतद्' इतिभाष्यप्रयोगात् समासे सोरलुगिति विज्ञायत इत्यर्थं इति दिक् ।

## ६ प्रश्नोत्तराणि

उ०—शेष इति लक्षणाश्चाधिकारश्चेति–प्रइणक्षुण्णादिष्वर्थेषूत्तरसूत्रानुपात्तेष्वेषु अणो विधायकमित्यर्थः ।

ननु लक्षणं तावद्व्यर्थम् । "तस्येदम्" इत्यनेन चाक्षुशादीनां "संस्कृतं भक्षाः" इत्यनेन दार्षदादीनां सिद्धेः । तथाऽधिकारोऽपिव्यर्थः, तथाहि—अधिकारस्यापत्यादिचतुरर्थपर्यन्तेष्वर्थेषु घादीनां टयुटयुलन्तानां निवृत्तिः, जातार्थसाकल्यं वा प्रयोजनम् । तत्र निवृत्तिस्तावन्न प्रयोजनम् । आर्द्रकशालादीनामुत्करादिपाठेन इतः प्राचीनेष्वर्थेषु घादयो न प्रवर्त्तन्ते इति ज्ञापनात् । अन्यथा—"वृद्धाच्छः" इत्येव सिद्धे तत्पाठस्य वैयर्थ्यप्रसंगात् । नाप्यर्थसाकल्यं प्रयोजनम् । जाताधिकारात्प्राक्पाठसामर्थ्यादेव तल्लाभात् । यदि सन्निहिते जातार्थ एव घादयः स्युः, तदुत्तरेषु भवाद्यर्थेषु "प्राग्दीव्यतः" इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युः, तदा जाताधिकारानन्तरमेव "प्रावृषष्ठप्" इत्यादिभिः सह "राष्ट्रावारपाराद्घखौ"इत्यादयोऽपि पठेरन् । तस्माद्व्यर्थमिदं सूत्रमिति चेत । अत्रोच्यते–"शैषिकात्सरूपः शैषिको न" इति वक्ष्यमाणार्थस्य विषयलाभाय शेषाधिकारस्तदावश्यकः । शैषिकत्वप्रयुक्तकार्यविशेषं जनयितुं क्रियमाणः शेषाधिकार एव । "शैषिकान्मतुबर्थीयाच्छैषिकोमतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्नसनिष्यते" इति श्लोकं ज्ञापयति । एष च श्लोकः सन्विधौ मतुब्विधौ च भाष्ये पठितः । इह तु सन्नन्ते पठित इति तत्रैव व्याख्यास्यते । अपत्यादिष्वर्थेषु घादीनां निवृत्त्यर्थमप्यधिकार आवश्यकः । नचोक्त ज्ञापके-

नैव तत्सिद्धिरिति वाच्यम्। ज्ञापकस्य विशेषापेक्षत्वे दोषतादवस्थ्यात्। आर्द्रका-दिभ्यो यदि च्छः स्यात्तर्हि चतुरर्थ्यामेव इति नियमस्यापि सम्भवाच्च। एवं स्थिते चाक्षुषमित्यादिषु गृह्यमाणत्वादिप्रकारकबोधनाय विधायकत्वमपि तस्य सुवचमिति दिक्।

---

१९२८

२ पत्रम्।

१—लिङो ङित्वेन सिद्धे यासुटो ङित्वं किमर्थमिति साधूपपाद्यताम्।

२—वव्रृके, चक्षंसे, विव्यतुः, वोधातुं विना, ऊखतुः। एषु गुण-दीर्घह्रस्ववारणप्रकारः स्पष्टमुपपादनीयः।

३—वर्त्स्यन्ति, कल्प्स्यति, स्यन्त्स्यति, एषु विशेषकार्याणि तत्तत्सू-त्राणि च प्रदर्शनीयानि।

४—जक्षितः, जक्षतुः, अस्त्रः, अस्वपः, अशात्, अचकात्, ईजतुः, एतेषां सिद्धिप्रकारः स्फुटमुपदर्शनीयः।

५—संज्ञायाः कार्यकालत्वादित्यादिकारिका विशदं व्याख्यायताम्।

## १ प्रश्नोत्तराणि

उ०—यासुटो ङित्वेनेति—१५ पृष्ठे द्रष्टव्यम्।

## २ प्रश्नोत्तराणि

उ०—वव्रृके—वृक् इत्यस्य "भूवादयो धातवः" इत्यनेन धातुसंज्ञायां धातु-त्वाल्लिट्लकारे आत्मनेपदे त प्रत्यये "लिटस्तझयोरेशिरेच्" इत्यनेन तका-रस्य एशादेशे "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायाम्। "उरत्" इत्यनेनात्वे रपरत्वे "हलादिःशेषः" इत्यनेन लोपे कित्वात्परत्वेन "पुगन्तलघूपधस्य च" इत्यनेन प्राप्तस्य गुणस्य "ऋदुपधे-भ्योलिटः कित्वं गुणात्पूर्वविप्रतिषेधेन" इति निषेधे वव्रृके इति सिद्धम्।

चक्षंसे—'क्षमूष' सहने इत्यस्माद्धातो लिंट्लकारे मध्यमपुरुषैकवचने थास्-प्रत्यये "थासः से" इत्यनेन से आदेशे "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन लोपे

"कुहोश्चुः" इत्यनेन चुत्वे चक्षम् से इति स्थिते "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यस्य वैकल्पिकत्वेन इडभावपक्षे मकारस्यानुस्वारे चक्षंसे इति सिध्यति। अत्र "अनुनासिकस्य क्विझलोक्ङिति" इत्यनेन दीर्घस्तु न शंकनीयः। क्विप् साहचर्येण तिङ्भिन्नस्यैव झलादेस्तत्र ग्रहणादिति दिक्।

विव्यतुः—८ पृष्ठे द्रष्टव्यम्।

ऊखतुः—उखधातोर्लिट्लकारे अतुस्प्रत्यये तस्य "असंयोगाल्लिट् कित्" इत्यनेन कित्संज्ञायां कित्वाल्लघूपधगुणाभावे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन लोपे पर्जन्यवल्लक्षणप्रवृत्या "ह्रस्वः" इत्यनेनाभ्यासस्य ह्रस्वत्वे सवर्णपरकत्वाभावाद् "अभ्यासस्यासवर्णे" इत्यनेन इयङभावे सवर्णदीर्घे च ऊखतुः इति सिद्धम्। ननु सवर्णदीर्घसंपन्नस्योकारस्य एकादेशतया पूर्वान्तवद्भावेनाभ्यासमन्वयित्वाद् "ह्रस्वः" इत्यनेन ह्रस्वस्यादिति चेन्न। "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति न्यायमाश्रित्य पर्जन्यवल्लक्षणप्रवृत्या पूर्वं प्रवृत्तस्य ह्रस्वस्य दीर्घे कृते पुनः प्राप्त्यभावादिति दिक्।

## ३ प्रश्नोत्तराणि

उ८—वर्त्स्यति—वृतु वर्तने इत्यस्माद्धातोर्लृट लकारे ति प्रत्यये "स्यतासी लृलुटोः" इत्यनेन स्य प्रत्यये "वृद्भ्यः स्यसनोः" इत्यनेन विकल्पेन परस्मैपदे "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमे प्राप्ते "न वृद्भ्यश्चतुर्भ्यः" इत्यनेन वलादिलक्षणेटः प्रतिषेधे "पुगन्तलघूपधस्य च" इत्यनेन लघूपधगुणे वर्त्स्यति। इति सिद्धम्।

कल्प्स्यति। कृपू सामर्थ्ये इत्यस्माद्धातोर्लृट् लकारे "लुटि च क्लृपः" इत्यनेन विकल्पेन परस्मैपदे परस्मैपदविवक्षायां तिप्रत्यये "स्यतासी लृलुटोः" इत्यनेन स्य प्रत्यये "आर्धधातुकस्येड्वलादेः" इत्यनेन नित्येड् प्राप्ते ऊदित्वात् "स्वरतिसूतिसूयति धूञूदितो वा" इत्यनेन वैकल्पिकेनेटिप्राप्ते "तासि च क्लृपः" इत्यनेन निषेधे पुगन्तेतिगुणे "कृपो रो लः" इत्यनेन रेफस्य लकारे कल्प्स्यति। इति सिध्यति। परस्मैपदाभावे तप्रत्यये स्य इति कृते "आदेशप्रत्यययोः" इत्यनेन षत्वे "टित आत्मनेपदानां टेरे" इत्येत्वे कल्पिष्यते इति सिध्यति। इडभावे—कल्प्स्यते इति सिध्यति।

स्यन्त्स्यति—ऊकारेत्संज्ञक स्यन्द धातो र्लृट् लकारे "वृद्भ्यः स्य सनोः" इति परस्मैपदपक्षे तिपि अनुबन्धलोपे स्य प्रत्यये "आर्धधातुकस्येड्वलादेः" इत्यनेनेड्प्राप्ते तं प्रबाध्य ऊदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन विकल्पेनेट्प्राप्ते तं बाधित्वा "न वृद्भ्यश्चतुर्भ्यः" इत्यनेनेड्निषेधे दकारस्य चर्त्वे "स्यन्त्स्यति" इतिरूपं सिध्यति। नचासिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया अन्तरङ्गत्वादूदित्लक्षणेड्विकल्पस्यैव वक्तुमौचित्येन सकारादिविशेषापेक्षतया तङानाभावनिमित्तापेक्षया च "न वृद्भ्यः चतुर्भ्यः" इति निषेधस्य बहिरङ्गतयोक्तरूपमयुक्तमिति वाच्यम्। "न वृद्भ्यश्चतुर्भ्यः" इति सूत्रे चतुर्ग्रहणसामर्थ्यादन्तरङ्गस्यापीटो बाधात्। अत्रोदित्लक्षणो इड्विकल्पे प्रवृत्ते हि प्रकृतसूत्रे चतुर्ग्रहणं व्यर्थं स्यात्।

## ४ प्रश्नोत्तराणि

उ०—जक्षितः—अदादिकात् जक्षधातो र्लट्लकारे तसि प्रत्यये "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसञ्ज्ञायां "कर्त्तरि शप्" इत्यनेन शपि। "अदिप्रभृतिभ्यः शपः" इत्यनेन शपो लुकि "रुदादिभ्यः सार्वधातुके" इत्यनेनेटि कृते सकारस्य रुत्वे विसर्गे च जक्षितः इति सिध्यति।

जक्षतुः—८ पृष्ठे द्रष्टव्यम्।

अश्वः—श्वि धातो र्लुङ्लकारे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे सिप् प्रत्यये अनुबन्धलोपे "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसञ्ज्ञायाम् "कर्त्तरि शप्" इत्यनेन प्राप्तशपं बाधित्वा "च्लि लुङि" इति च्लौ "जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च" इत्यनेन च्लेश्चङि, अनुबन्धलोपे "श्वयतेरः" इत्यनेनेकारस्याकारे पररूपे सकारस्य रुत्वे विसर्गे च कृते अश्वः इति सिध्यति।

अस्वपः—स्वप् धातो र्लङ्लकारे सिपि अनुबन्धलोपे "कर्तरि शप्" इत्यनेन विहितस्य शपो "अदिप्रभृतिभ्यःशपः" इति शपो लुकि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "अड्गार्ग्यगालवयोः" इत्यनेनाडागमे इकारस्य "इतश्च" इत्यनेन लोपे सकारस्य रुत्वे विसर्गे च कृते अस्वपः इति साधुः।

अशात्—शास् धातो र्लङ्लकारे तिपि "इतश्च" इतीकारलोपे लुङ्लङीत्यादिनाडागमे अनुबन्धलोपे "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसं-

ज्ञायां "कर्त्तरि शप्" इत्यनेन शपि "अदिप्रभृतिभ्यः शपः" इत्यनेन शपो लुकि "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यादिना तलोपे "तिप्यनस्तेः" इत्यनेन सकारस्य दत्वे "वाऽवसाने" इत्यनेन विकल्पेन चर्त्वे च कृते अशात् इति रूपं सिद्धम् ।

अचकात्—चकास् इत्यस्माद्धातो लॅङि लकारे सिपि प्रत्यये अनुबन्धलोपे "इतश्च" इतीकारलोपे लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यनेनाडागमे अनुबन्धलोपे अचकास् स इति जाते "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" सिपः सकारलोपे "सिपि-धातोरुर्वा" इत्यनेन धातोः सकारस्य विकल्पेन रुत्वे विसर्गे च अचकाः इति रूपं सिध्यति । रुत्वाभावपक्षे तु—"झलां जशोऽन्ते" इति जश्त्वेन सकारस्य दकारे तस्य च चर्त्वेन तकारे च कृते अचकात् इति रूपान्तरं सिध्यति ।

ईजतुः—यज धातो लिंटि तस् प्रत्यये परस्मैपदानामिति अतुसि 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनात् पूर्वं "वचिस्वपियजादीनां किति" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे ऽभ्याससञ्ज्ञायां "हलादिः शेषः" इत्यनेन लोपे सवर्णदीर्घे च कृते ईजतुः इति सिद्धम् ।

## ९ प्रश्नोत्तराणि

उ०—कार्यकालपक्षे संज्ञाशास्त्रविधिशास्त्रयोरेकवाक्यतया "सन्वल्लघुनि-चङ्परेऽनग्लोपे" इत्यत्र "पूर्वोऽभ्यासः" इत्यस्योपस्थितिर्भवति । चङ् परो यस्मादिति बहुव्रीहिः नतु कर्मधारयः परग्रहणनैयर्थ्यापत्तेः । चङ्पर इत्यनुवर्त्तमा-नमङ्गस्येति चावर्त्तते । एकस्याङ्गस्य चङ्परेऽन्वयः । तस्य लघुनि अन्वयः । अपरस्याङ्गस्य पूर्वोऽभ्यास इत्यत्राध्याहृतद्विरुच्चारणक्रियायां कर्मतयाऽन्वयः । उपपदविभक्तेरितिन्यायात् । लघूनीत्यस्य चाभ्यासेऽन्वयः । अपरस्य चङ्पर इत्यस्य अग्लोपेऽन्वयः । तथा च—अङ्गसञ्ज्ञानिमित्तं यच्चङ्परं णिः तत्परं यल्लघु तत्परो यः अङ्गकर्मकद्विरुच्चारणीभूतस्य पूर्वोभागः अभ्यासः तस्य सनीव कार्यं स्यात् चङ्परेणावग्लोपे सति इत्यर्थः । एवञ्च—यत्राङ्गकर्मकद्विरुच्चारणम् अचीकमत् इत्यादौ तत्रैव सन्वद्भावः दीर्घश्च भवतः नतु अनेकाच्सु तथा च—अचचकासत् आत-थपत् औणॅनवत् इत्याद्येवरूपम् । इति माधवमतम् ।

ननु कार्यकालपक्षे सञ्ज्ञाशास्त्रविधिशास्त्रयोः एकवाक्यताङ्गीकारे "पूर्वोऽभ्या-

"हलादिःशेषः" इत्यादीनामपि यत्राङ्गस्य द्विरुच्चारणं तत्रैव प्रवृत्तिः स्यादिति—अचीचकासदित्यादेरसिद्धिः । किञ्च इह कस्मान्न भवति अजजागरदिति लघुनि चङ्परे इत्युच्यते सन्निहितं चात्र लघुचङ्परमिति भाष्यासङ्गतिः । जागृधातो रङ्गकर्मकद्विरुच्चारणाभावेन सन्वद्भावाप्रवृत्तेः । तथा च संज्ञाशास्त्रविधिशास्त्रयोः यथोद्देशपक्ष एवाङ्गी कर्त्तव्य इत्याशयेनाह वस्तुतस्त्वित्यादि—

अयम्भावः—अङ्गस्येति नावर्तते—प्रत्ययस्याङ्गाचो उत्थिताकाङ्क्षया चङ्पर इत्यस्य अङ्गेऽन्वयः एवञ्च—चङ्परे णौ यदङ्गं तदवयवो योऽभ्यासः तस्य सनीव कार्यं स्याच्चङ्परे णावग्लोपेऽसति इत्यर्थः । एवं च—अचीचकासत् इति रुपम् भविष्यति । यद्वा सन्निहितत्वात् चङ्पर इत्यस्य लघूनि-अन्वयः चङ्परेणौ यल्लघुतत्परको योऽङ्गस्याभ्यासः तस्य सनीव कार्यं स्याच्चङ्परेणावग्लोपेसति इत्यर्थः एवं च 'अचीचकासत्'इदि रूपम् । व्याख्याद्वयेऽपि—और्णुनवदित्यत्र दीर्घः आर्तीथपदित्यत्र सन्वद्भावः दीर्घश्च इदं व्याख्याद्वयं कैयटेनैव वर्णितम् । इह कस्मान्न भवति—अजजागरत् लघुनि चङ्परे इत्युच्यते । इतिभाष्यात् चङ्पर इत्यस्य लघुन्यन्वय एवोचित इति दिक् ।

---

१९२९

१ पत्रम् ।

१—नान्दीपुरकः, मुखतीयम् , हैमनम् , नैशः, पौरोडाशिकः, शारी, रकोषः, कृशाश्विनः पिष्टमयम् , द्रव्यम् , कांस्यम् , एतेषां ससूत्रं साधुत्वं यथासम्भवं रुपभेदाः, दर्शितार्थभेदश्च दर्शनीयः ।

२—विभाषा विवधात् , क्त्रेर्मम्नित्यम् , नाभिनभञ्च, वतोरिड्वा विरागविरंगश्च, तेन निर्वृत्तम् , प्रकृष्टे ठञ् , अर्हतो नुम् च एतानि सोदाहरणीयानि ।

३—नासिका, नि, फेन, कं, शम् , उपेन्द्रदत्तः एतेषां दर्शितरूपभेदाः ससूत्रं दर्शनीयाः ।

४—परुत् , परारि, इत्थम् , उपरि, ज्येष्ठः, ईश्वराधीनः, पितृदेवत्यम् , एते किमर्थभाजः कथं साधवश्च ।

५—विप्रत्राकरोति, शम्बाकरोति, सत्याकरोति, मद्राकरोति, एकैकया आहुत्या जुहोति । एते दर्शितार्थदर्शनपूर्वकं साधनीयाः ।

## १ प्रश्नोत्तराणि

उ०—नान्दीपुरकः—नान्दीपुरे जात इत्यर्थे नान्दीपुरशब्दात्—"वृद्धाच्छः" इत्यनेन छ प्रत्यये प्राप्ते अपवादत्वात्तं प्रबाध्य "प्रस्थपुरवहान्ताच्च" इत्यनेन वुञि कृते अनुबन्धलोपे "युवोरनाकौ" इत्यनेन वोरकादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे तद्धितान्तत्वात् "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च कृते "नान्दीपुरकः" इति सिध्यति ।

मुखतीयम् । मुखे जातमित्याद्यर्थे 'आद्यादिभ्य उपसङ्ख्यानम्' इत्यनेन आद्यादित्वात्तसिः । तस् प्रत्ययान्तान्मुखतशब्दात् "मुखपार्श्वतसोर्लोपश्च" गहादिगणसूत्रेण छ प्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यनेनेयादेशे "अलोऽन्त्यस्य" इत्यनेन तसः सकारस्य लोपे भसंज्ञायां "यस्येति च" इत्यकारलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां सौ "अतोऽम्" इत्यनेन अमि कृते मुखतीयमिति सिद्ध्यति ।

हैमनम्—हेमन्ते जात इत्यर्थे "सर्वत्राण् च तलोपश्च" इत्यनेनाणि कृते अकारविशिष्टस्य तशब्दस्य लोपे च कृते "नस्तद्धिते" इत्यनेन टिलोपे प्राप्ते "अन्" इत्यनेन प्रकृतिभावे—तकारस्यैव लोप इति पक्षे तु—भसंज्ञायां "यस्येति च" इत्यल्लोपस्यासिद्धत्वात्स्थानिवद्भावाद्वा टिलोपाभावे आदिवृद्धौ प्रातिपदिकत्वात् सोरमादेशे हैमनम् इति साधु ।

नैशः—निशायां व्याहरतीत्यर्थे निशा शब्दात् "व्याहरतिमृगः" इत्यनेनाणि भसंज्ञायां "यस्येति च" इत्यकारलोपे—णित्वात् "तद्धितेष्वचामादेः" इत्यनेन वृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते नैशः इति साधु । नैशिकः इति "तदस्य सोढम्" इत्यर्थे "निशाप्रदोषाभ्यां च" इत्यनेनाण्ठञौ—उभावपि सिध्यतः ।

पौरोडाशिकः—पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः—प्रज्ञादित्वात्स्वार्थेऽण् । तस्य व्याख्यानस्तत्र भवो वेत्यर्थे पुरोडाशशब्दात् "पौरोडाशपुरोडाशात्ष्ठन्" इति ष्ठनि ठस्येकादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ रुत्वविसर्गे च कृते पौरोडाशिकः इति सिध्यति । षित्वं तु स्त्रियां ङीबर्थम् ।

**शारीरकीयः**—शरीरस्यायं शारीरो जीवात्मा। तस्येदमित्यण्णन्तात्स्वार्थे कः। शारीरकमधिकृत्य कृतो ग्रन्थ इत्यर्थे "अधिकृत्य कृते ग्रन्थे" इति सूत्रबलात् वृद्धत्वाच्छप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यादिनेयादेशे भसंज्ञायां "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात्सौ रुत्वविसर्गे च शारीरकीयः इति साधु।

**कृशाश्विनः**—कृशाश्वेन प्रोक्तं नटसूत्रमधीयत इत्यर्थे कृशाश्वशब्दात् "कर्मन्दकृशाश्वादिनिः" इतीनिप्रत्यये ततोऽध्येत्रणो लुकि बहुवचने प्रातिपदिकत्वाज्जसि अनुबन्धलोपे सकारस्य रुत्वे विसर्गे च कृशाश्विनः इति साधु।

**पिष्टमयम्**—पिष्टस्य विकार इत्यर्थे पिष्टशब्दात् "पिष्टाच्च" इत्यनेन मयटि—अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे पिष्टमयम् इति साधु।

**द्रव्यम्**—४ पृष्ठे द्रष्टव्यम्।

**कांस्यम्**—कंसाय हितमित्यर्थे कंसशब्दात् "तस्मैहितम्" इत्यनेन छ प्रत्यये कंसीयशब्दो निष्पद्यते "तस्य विकारः" इत्यर्थे कंसीयशब्दात् "कंसीयपरशव्ययोर्यञञौलुक् च" इत्यनेन यञ्प्रत्यये अनुबन्धलोपे छप्रत्ययस्य च लुकि कृते ञित्वात् "तद्धितेष्वचमादेः" इत्यनेन वृद्धौ भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे कांस्यम् इति सिध्यति।

हैमनम् अस्येति हैमन्तम्। इत्यपररूपम्। नैशः अस्य नैशिकः इत्यप रूपम्। निशायां व्याहरति, निशायां भव इत्यादयोऽर्थभेदाः। शारीरकीय अस्य शारीरकमित्यप्यभेदोपचारात्।

## २ प्रश्नोत्तराणि

उ०—"विभाषाविवधात्" इति विवधेन हरति इति विवधिकः। पक्षे ठक्। वैवधिकः। एकदेशविकृतस्यानन्यत्वाद्वीवधादपि छन्। वीवधिकः। षित्वात् ङीष्—विवधिकी। विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्दवाह्ये काष्ठे वर्तेते।

"क्त्रेर्मम्नित्यम्"। कृत्यानिर्वृत्तं कृत्रिमम्।

"नासिनसञ्च" नस्योऽक्षः, नस्यमञ्जनम्।

"वतोरिड्वा"—तावतिकः, तावत्कः।

"विरागविरङ्गं च"—विरागं नित्यमर्हति वैरागिकः, वैरङ्गिकः।

५—विप्रत्राकरोति, शम्वाकरोति, सत्याकरोति, मद्राकरोति, एकैकया आहुत्या जुहोति । एते दर्शितार्थदर्शनपूर्वकं साधनीयाः ।

## १ प्रश्नोत्तराणि

उ०—नान्दीपुरकः—नान्दीपुरे जात इत्यर्थे नान्दीपुरशब्दात्—"वृद्धाच्छः" इत्यनेन छ प्रत्यये प्राप्ते अपवादत्वात्तं प्रबाध्य "प्रस्थपुरवहान्ताच्च" इत्यनेन वुञि कृते अनुबन्धलोपे "युवोरनाकौ" इत्यनेन वोरकादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे तद्धितान्तत्वात् "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च कृते "नान्दीपुरकः" इति सिध्यति ।

मुखतीयम् । मुखे जातमित्याद्यर्थे 'आद्यादिभ्य उपसङ्ख्यानम्' इत्यनेन आद्यादित्वात्तसिः । तस् प्रत्ययान्तान्मुखतशब्दात् "मुखपार्श्वतसोर्लोपश्च" गहादिगणसूत्रेण छ प्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यनेनेयादेशे "अलोऽन्त्यस्य" इत्यनेन तसः सकारस्य लोपे भसंज्ञायां "यस्येति च" इत्यकारलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां सौ "अतोऽम्" इत्यनेन अमि कृते मुखतीयमिति सिद्धयति ।

हैमनम्—हेमन्ते जात इत्यर्थे "सर्वत्राण् च तलोपश्च" इत्यनेनाणि कृते अकारविशिष्टस्य तशब्दस्य लोपे च कृते "नस्तद्धिते" इत्यनेन टिलोपे प्राप्ते "अन्" इत्यनेन प्रकृतिभावे—तकारस्यैव लोप इति पक्षे तु—भसंज्ञायां "यस्येति च" इत्यल्लोपस्यासिद्धत्वात्स्थानिवद्भावाद्वा टिलोपाभावे आदिवृद्धौ प्रातिपदिकत्वात् सोरमादेशे हैमनम् इति साधु ।

नैशः—निशायां व्याहरतीत्यर्थे निशा शब्दात् "व्याहरतिमृगः" इत्यनेनाणि भसंज्ञायां "यस्येति च" इत्यकारलोपे—णित्त्वात् "तद्धितेष्वचामादेः" इत्यनेन वृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते नैशः इति साधु। नैशिकः इति "तदस्य सोढम्" इत्यर्थे "निशाप्रदोषाभ्यां च" इत्यनेनाण्ठञौ—उभावपि सिध्यतः।

पौरोडाशिकः—पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः—प्रज्ञादित्वात्स्वार्थेऽण् । तस्य व्याख्यानस्तत्र भवो वेत्यर्थे पुरोडाशशब्दात् "पौरोडाशपुरोडाशात्ष्ठन्" इति ष्ठनि ठस्येकादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ रुत्वविसर्गे च कृते पौरोडाशिकः इति सिध्यति । षित्वं तु स्त्रियां ङीबर्थम् ।

शारीरकीयः—शरीरस्यायं शारीरो जीवात्मा। तस्येदमित्यण्णन्तात्स्वार्थे कः। शारीरकमधिकृत्य कृतो ग्रन्थ इत्यर्थे "अधिकृत्य कृते ग्रन्थे" इति सूत्रबलात् वृद्धत्वाच्छप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यादिनेयादेशे भसंज्ञायां "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात्सौ रुत्वविसर्गे च शारीरकीयः इति साधु।

कृशाश्विनः—कृशाश्वेन प्रोक्तं नटसूत्रमधीयत इत्यर्थे कृशाश्वशब्दात् "कर्मन्दकृशाश्वादिनिः" इतीनिप्रत्यये ततोऽध्येत्रणो लुकि बहुवचने प्रातिपदिकत्वाज्जसि अनुबन्धलोपे सकारस्य रुत्वे विसर्गे च कृशाश्विनः इति साधु।

पिष्टमयम्—पिष्टस्य विकार इत्यर्थे पिष्टशब्दात् "पिष्टाच्च" इत्यनेन मयटि—अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे पिष्टमयम् इति साधु।

द्रव्यम्—४ पृष्टे द्रष्टव्यम्।

कांस्यम्—कंसाय हितमित्यर्थे कंसशब्दात् "तस्मैहितम्" इत्यनेन छ प्रत्यये कंसीयशब्दो निष्पद्यते "तस्य विकारः" इत्यर्थे कंसीयशब्दात् "कंसीयपरशव्ययार्यञञौलुक् च" इत्यनेन यञ्प्रत्यये अनुबन्धलोपे छप्रत्ययस्य च लुकि कृते ञित्वात् "तद्धितेष्वचमादेः" इत्यनेन वृद्धौ भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे कांस्यम् इति सिध्यति।

हैमनम् अस्येति हैमन्तम्। इत्यपररूपम्। नैशः अस्य नैशिकः इत्यपररूपम्। निशायां व्याहरति, निशायां भव इत्यादयोऽर्थभेदाः। शारीरकीय अस्य शारीरकमित्यप्यभेदोपचारात्।

## २ प्रश्नोत्तराणि

उ०—"विभाषाविवधात्" इति विवधेन हरति इति विवधिकः। पक्षे ठक्। वैवधिकः। एकदेशविकृतस्यानन्यत्वाद्वीवधादपि छन्। वीवधिकः। षित्वात् ङीष्—विवधिकी। विवधवीवधशब्दो उभयतो बद्धशिक्ये स्कन्दवाह्ये काष्ठे वर्तेते।

"क्त्रेर्मम्नित्यम्"। कृत्यानिर्वृत्तं कृत्रिमम्।

"नाभिनभञ्च" नभ्योऽक्षः, नभ्यमञ्जनम्।

"वतोरिड्वा"—तावतिकः, तावत्कः।

"विरागविरङ्गं च"—विरागं नित्यमर्हति वैरागिकः, वैरङ्गिकः।

"तेन निर्वृत्तम्"—अह्ना निर्वृत्तमाह्निकम्। "प्रकृष्टे ठञ्"—प्रकृष्टो दीर्घः कालो अस्येति कालिकं वैरम्। "अर्हतो नुम् च"—अर्हतो भावः कर्म वा—आर्हन्त्यम्, आर्हन्ती।

## ३ प्रश्नोत्तराणि

उ०—नासा एव नासिकाः। स्वार्थेकः। "प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः"इतीत्वम्। इति प्रागुक्तम्। अत्र तु नासिकायै हितमित्यर्थे "शरीरावयवाद्यत्"इति यति प्रत्यये "नस् नासिकायाः"इति नासिकाया नसादेशे विभक्तिकार्ये च। नस्यमिति रुपम्। निशब्दस्य तु "नेर्बिड्जबिरीसचौ"निबिडम्, निबिरीसम्। "फेनादिलच्च"इति फेनशब्दादिलचि, लचि, मतुपि, च फेनिलः, फेनलः, फेनवानिति, कं शब्दात् शं शब्दाच्च "कंशंभ्यां बभयुस्तितुतयसः" इति सूत्रेण सप्तप्रत्यया भवन्ति। तद्यथा—कंवः, कम्भः, कंयुः, कन्तिः कन्तुः, कन्तः, कंयः। शम्बः, शम्भः, शंयुः, शन्तिः, शन्तुः, शन्तः, शंयः। उपेन्द्रदत्तशब्दस्य षड्रुपाणि। उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः। तत्र–उपेन्द्रदत्तशब्दात् "प्राचामुपादेरडज्वुचौ च"इत्यडचि, द्वितीयं सन्ध्यक्षरमिति—एकारादिलोपे—उपडः इतिरुपम्। तेनैव वुचि तथैव लोपे च–उपक इति रुपम्। "घनिलचौ च"इति सूत्रेण घनि इलचि च तृतीय चतुर्थौ रुपे "बह्वचो मनुष्यनाम्नष्ठज्वा"इति ठचि तु उपिकः इति क प्रत्यये च उपेन्द्रदत्तक इति षष्ठं रुपम्।

## ४ प्रश्नोत्तराणि

उ०—पूर्वस्मिन्वत्सरे—परुत्शब्दः, पूर्वतरे च वत्सरे परारिशब्दः प्रयुज्यते। तत्र "सद्यः परुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः" इत्यनेन सूत्रेण निपातनात् पूर्वशब्दाद् उति प्रत्यये पूर्वशब्दस्य च परभावे च परुत् इति सिध्यति।

पूर्वतरशब्दादारिप्रत्यये पूर्वतरशब्दस्य परभावे परारि इति रुपम्।

अनेन प्रकारेणेत्यर्थे इत्थं शब्दः प्रयुज्यते तत्र—इदं शब्दात्–"इदमस्थमुः" इति थमुप्रत्यये "एतेतौरथोः" इति इदमः एतादेशे इत्थम् इति रूपम्। थमु प्रत्यये उकारउच्चारणार्थः। अन्त्यत्वाभावाच्च मकारस्य नेत्वम्।

दिग्देशकालेष्वभिधेयेषु-ऊर्ध्वं देशे वसति, उर्ध्वदेशादागतः, उदूर्ध्वदेशो रम-

नीयः, इत्येतेष्वर्थेषु—उपरिशब्दः प्रयुज्यते। ऊर्ध्वशब्दात् 'उपर्युपरिष्टात्' इत्यनेन रिल्प्रत्यये ऊर्ध्वस्य उपादेशे अनुबन्धलोपे विभक्तिकार्ये उपरि इति सिध्यति।

अयमनयोरतिशयेन वृद्ध इत्यर्थे ज्येष्ठशब्दः। वृद्धशब्दस्य ज्यादेशविधानसामर्थ्यादिष्ठनि "वृद्धस्य च"इति ज्यादेशे टिलोपे अनुबन्धलोपे विभक्तिकार्ये च ज्येष्ठः इति सिध्यति।

ईश्वर इति सप्तम्यर्थे 'ईश्वराधिशब्दः ततः स्वार्थे "अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः"इति ख प्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्"इत्यनेन-खस्येनादेशे ईश्वराधीन इति रूपम्।

पितृदेवता शब्दात् "देवतान्तात्तादर्थ्ये यत्"इति यति पितृदेवत्यम् इति सिद्धम्। पितृदेवताभ्यो यद्द्रव्यादिकं दीयते तस्मिन् वाच्ये पितृदेवत्यमिति।

## ९ प्रश्नोत्तराणि

उ०—विप्रत्राकरोति—विप्राधीनं देयं करोतीत्यर्थे विप्रशब्दात् "देये त्रा च"इति त्रा प्रत्यये विप्रत्राकरोति इति रूपम्।

शम्बाकरोति—अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थे शम्ब शब्दात् "कृञोद्वितीयतृतीयशम्बबीजात्कृषौ" इत्यादिना डाचि प्रत्यये टिलोपे च शम्बाकरोति इति रूपम्।

सत्याकरोति—सत्यं मयैवेतद्ग्राह्यमिति बुद्ध्वा परीक्षादिना—सत्यंकारद्रव्यप्रदानेन च दृढं करोति करोतीत्यर्थे सत्यशब्दात्—"सत्यादशपथे"इति डाचि डित्वाट्टिलोपे सत्याकरोति इति सिद्ध्यति।

मद्राकरोति—मद्रंकरोतीत्यर्थे मद्रशब्दात् "मद्रात्परिवापणे"इति डाचि प्रत्यये मद्राकरोति इति रूपम्, माङ्गल्यमुण्डनेन संस्करोतीति तदर्थः।

एकैकया आहुत्या जुहोति—एकयेत्यस्य "नित्यवीप्सयोः"इति द्वित्वे सति एकया एकया जुहोतीति स्थिते तत्र "एकं बहुव्रीहिवत्"इति सूत्रेण बहुव्रीहित्वेन समुदायस्य प्रातिपदिकत्वात्सुपोर्लुकि पूर्वखण्डस्य पुंवत्वे कृते समुदायात्पुनस्तृतीयोत्पत्तौ एकैकयेति रूपम्। बहुव्रीहिवत्वाभावे तु इह समुदायस्य प्रातिपदिकत्वाभावात् सुपोर्लुक्, पूर्वखण्डस्य पुंवत्वं च नस्यात्। उत्तरपदपरकत्वाभावात्

समासचरमावयवस्यैवोत्तरपदत्वादिति भावः । एकैकामित्यत्र उत्तरखण्डस्य "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति पुंवत्वस्य बहुव्रीहित्वे सत्यपि न प्रवृत्तिमर्हति । पूर्वस्यैवेदं "भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि" इति लिङ्गादियुक्तत्वादिति बोध्यम् । ननु सुपोर्लुकि पूर्वखण्डस्य एकाशब्दस्य पुंवत्वे सत्यसति वा वृद्धौ एकैकयेति सिध्यत्येवेत्यत आह इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः । समस्तपदस्य द्विधाकरणे पूर्वखण्डः अवग्रहः । "तस्य पूर्वोऽवग्रहः" इति प्रातिशाख्यम् । एकैकयेत्येक एकया इतीष्यते पूर्वखण्डस्य पुंवत्वाभावे तु एकैकयेत्येका एकयेति स्यादिति भावः । तैत्तिरीयास्तु-एकैकयेत्येकाएकया इत्येवावगृह्णन्ति ।

---

१९२९

२ पत्रम् ।

१—यासुटो ङित्करणस्य प्रयोजननिरूपणपुरस्सरमेतानि रूपाणि, साध्यन्ताम्—एधाञ्चकृढ्वे, ऊखतुः, आनृजे, विव्ययिथेति ।

२—संज्ञायाः कार्यकालत्वादित्याद्यः पञ्च कारिका व्याख्यायन्ताम् । वस्तुत इत्यादिनात्र माधवमते सूचितामरुचिञ्च प्रदर्शयत ।

३—विरमति, यच्छति, कल्तासि, अदित, एतेषां विशेषशास्त्रनिर्देशपुरस्सरं सिद्धिप्रकारः प्रदर्शनीयः ।

४—आरिथ, ऊवतुः,अचकाशीत् , सुषुषुपतुः, एतानि संसाध्य दरिद्रा दुर्गतावित्यस्य लिटि कानि कानि रूपाणि प्रदर्शितानि ग्रन्थकृता, तेषु कतमञ्च न्याय्यमित्यपि सप्रमाणमुपपाद्यताम् ।

५—स्वञ्जते, परिसोढा, प्रज्वालयति, एतेषां साधुत्वमसाधुत्वं वेति सप्रमाणं निरूप्यताम् ।

## १ प्रश्नोत्तराणि

उ०—यासुटोङित्करणमिति १५ पृष्ठे द्रष्टव्यम् ।

एधाञ्चकृढ्वे—एध् इत्यस्य "भूवादयो धातवः" इत्यनेन धातुसंज्ञायां धातुत्वाल्लिट्लकारे अनुबन्धलोपे "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि, एध् आम् ल इति स्थिते "आमः" इत्यनेन लिटो लुकि ततः "कृञ्चानुप्रयुज्यते

क्ङिति"इत्यनेन कृ अनुप्रयोगकलिट् प्रयोगे "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इत्यात्मने पदे लिटो मध्यमपुरुषबहुवचने ध्वमि एधाम् कृ ध्वमिति स्थिते "लिटि-धातो रनभ्यासस्य"इतिद्वित्वेऽभ्याससंज्ञायां "उरत्"इत्यत्वे रपरत्वे "हलादिः शेषः"इत्यनेन लोपे "कुहोश्चुः" इति चुत्वे "आर्धधातुकस्येड्वलादेः"-इत्यनेन इटि प्राप्ते "एकाच उपदेशेऽनुदात्तात्" इति निषेधे "इणःषीध्वं लुङ्लिटां धोऽङ्गात्" इत्यनेन मूर्धन्यादेशे च कृते "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे एधाञ्चकृढ्वे इति सिध्यति ।

ऊखतुः—४० पृष्ठे द्रष्टव्यम् ।

आनृजे—ऋज् गतिस्थानार्जनोपार्जनेषु इत्यस्माद्धातो लिंटि प्रथमपुरुषैकवचने आत्मनेपदे त प्रत्यये "असंयोगाल्लिट्कित्"इत्यनेन लिटः कित्वात् "क्ङिति च" इति गुणाभावे लिटस्तझयोरेशिरेच्"इत्यादिनैशादेशे "लिटिधातोरनभ्या-सस्य"इति द्वित्वे अभ्याससंज्ञायां "हलादिःशेषः"इत्यनेन लोपे "अत आदेः" इति दीर्घे "तस्मान्नुड्द्विहलः"इत्यनेन 'नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते' । तेन द्विहल्त्वान्नुटि—आनृजे इति सिध्यति ।

विव्ययिथ—व्येञ् धातो लिंट्लकारे सिप्स्थाने थलि प्रत्यये "आदेच उप-देशेऽशिति"इत्यादिनात्वे प्राप्ते "न व्यो लिटि"इत्यनेन निषेधे "लिटि धातोरन-भ्यासस्य"इति द्वित्वे "पूर्वोऽभ्यासः"इत्यभ्याससंज्ञायां परमपि "हलादिः शेषः"इति सूत्रं बाधित्वा यकारस्य संप्रसारणे ततः "इडत्त्यर्तिव्ययतीनां"इति नित्यमिटि अकित्वादभ्यासस्य "लिट्यभ्यासस्योभयेषाम्"इत्यनेन सम्प्रसा-रणे "सम्प्रसारणाच्च"इति पूर्वरूपे "हलादिः शेषः"इत्यनेन यलोपे अनभ्यास-स्यायादेशे विव्ययिथ इति सिद्ध्यति ।

## २ प्रश्नोत्तराणि

उ०—संज्ञायाः कार्यकालत्वादिति—४२ पृष्ठे द्रष्टव्यम् ।

## ३ प्रश्नोत्तराणि

उ०—विरमति—विपूर्वात् रमधातो लंटि "व्याङ्परिभ्यो रमः"इति-परस्मैपदे तिपि शपि च कृते विरमति इति रूपं सिद्ध्यति ।

यक्ष्यति—यज्धातो लृंटि तिपि अनुबन्धलोपे"स्यतासीलृलुटोः"इत्यनेन

स्यप्रत्यये "एकाच उपदेशेऽनुदात्तात्"इतीटिनिषिद्धे "व्रश्चभ्रस्जसृजमृज-यजराजभ्राजच्छशां षः"इतिसूत्रेण षत्वे "षढोः कः सि"इति षस्य कत्वे "आदेशप्रत्यययोः"इत्यनेन सस्य षत्वे च यक्ष्यति इति रूपम् ।

कल्प्तासि—कृप्धातोः "लुटि च क्लृपः"इति परस्मैपदे लुटो मध्यमपुरुष-स्यैकवचने सिप्रत्यये । कृप्–सि इति स्थिते "स्यतासीलृलुटोः"इत्यनेन तासि प्रत्यये अनुबन्धलोपे ऊदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा"इत्यनेन विकल्पेनेटि प्राप्ते "तासि च क्लृपः" इति नित्यमिण् निषेधे "पुगन्तलघूप-धस्य च" इत्यनेन गुणे रपरत्वे च "कृपो रो लः" इत्यनेन लत्वे च कृते कल्प्तासि इति सिद्धम् ।

अदित—दा इत्यस्य "भूवादयो धातवः" इत्यनेन धातुसंज्ञायां धातुत्वा ल्लुङ्लकारे आत्मनेपदे त'प्रत्यये' "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिचि अनुबन्धलोपे अ-दा-स-त इति स्थिते । "स्थाघ्वोरिच्च" इत्यनेन सिचः कित्वे धातोराकारस्येत्वे च कृते "ह्रस्वादङ्गात्"इति सिचो लोपे अदित इति सिद्धम् ।

## ४ प्रश्नोत्तराणि

उ०—आरिथ, ऋधातो लिटि सिपि थलि "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे अभ्याससंज्ञायां "उरत्" इत्यत्वे रपत्वे च कृते "हलादिः शेषः" इत्यनेन लोपे "अत आदेः"इत्यभ्यासाकारस्य दीर्घे अनभ्यासस्य "ऋच्छत्यृ-ताम्" इति गुणेऽत्र कृयादिनियमप्राप्तस्येटः "अचस्तास्वत्थल्यनिटो नित्यम्" इत्यनेन निषेधे ऋदन्तत्वाद्भारद्वाजमतेऽपि निषेधे प्राप्ते "इडत्यर्तिव्य-यतीनाम्"इति नित्यमिटिसवर्णदीर्घे आरिथ इति सिध्यति ।

ऊयतुः—वेधातो लिट्लकारे अनुबन्धलोपे "तिप्तस्झिसिप्थस्थमिब्व-स्मस्तातांझथासाथांध्वमिड्वहिमहिङ्" इत्यनेन तसि तस्य "परस्मै-पदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन अतुसि "वेञो वयिः"इत्यनेन वयादेशे द्वित्वे सम्प्रसारणे च प्राप्ते "सम्प्रसारणं तदाश्रयं च कार्यं बलवत्" इत्यनेन पूर्वं "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणे "लिटि धातोरनभ्यासस्य"इत्यनेन द्वित्वेऽभ्यास-

संज्ञायां "हलादिः शेषः"इत्यनेन लोपे ग्रहिज्येत्यादिना यकारस्यापि सम्प्रसारणे प्राप्ते "लिटि वयो यः"इत्यनेन निषेधे "वश्चास्यान्यतरस्यां किति" इत्यनेन यकारस्य वकारे सवर्णदीर्घे च कृते ऊवतुः इति सिध्यति।

अक्शासीत्—चक्षिङ्धातो लुङि "चक्षिङः ख्याञ्"इति सूत्रस्थया ख्शादिरयमादेश इष्यते इतिभाष्यकारेष्टया ख्यादेशे असिद्धकाण्डे "शस्य यो वा" इत्यनेन शकारस्थाने यकारादेशस्य पाक्षिकत्वेन तदभावे खकारस्य चर्त्वेन ककारे "च्लि लुङि"इति च्लौ "अस्यतिवक्तिख्यातिभ्योऽङ्"इत्यङ्विधौ ख्यातीति यकारनिर्देशादङभावे "च्लेः सिच्"इत्यनेन सिचि "यमरमनमातां सक् च"इतीटि सकि च कृते "अस्तिसिचोऽपृक्ते"इत्यनेनेडागमेऽनुबन्धलोपे "इट ईटि"इत्यनेन सलोपे सवर्णदीर्घे अक्शासीत् इति रूपं सिद्ध्यति।

सुषुषुपतुः—९ पृष्ठे द्रष्टव्यम्।

दरिद्राधातोर्लिटि—अनेकाच्त्वादाम् सवर्णदीर्घे च–दरिद्राञ्चकार, "आत औ णलः"इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम्। अत एव ज्ञापकादाम्नेत्येके ददरिद्रौ, ददरिद्रतुः इत्यादि रूपमुक्तं ग्रन्थकृता। कैयटमतमाह—"आत औ णलः"इत्यत्र प्रथमातिक्रमे कारणाभावात् ओकार एव विधातुमुचितः। वृद्धौ सत्यां तावतैव ययौ इत्यादिसिद्धेः तस्मादौकारविधानं दरिद्राधातोर्णलि "दरिद्रातेरार्धधातुके लोपो वक्तव्यः" इत्यालोपे सति वृद्धेरसम्भवात् ददरिद्रौ इत्योकार एव श्रूयेदित्यर्थः। अस्मादेव दरिद्रातेः औकारश्रवणार्थात् औकारविधानाद्दरिद्राते लिंटि आम्नेति विज्ञायते। आमि सति णल एवाप्रसक्तेरित्यर्थः। इदं च "कास्वेकाजाद्धसाम्"इति सूत्रभाष्ये ध्वनितं कैयटेन च स्पष्टीकृतम्। अतो द्वितीयं ददरिद्रौ इत्यपि न्याय्यम्। यत्तु—णलि—ददरिद्रेति—तन्निर्मूलमेव। "कास्प्रत्ययादाममन्त्रे लिटि"इति "कास्वेकाजाद्धसाम्"इति च सूत्रस्थ भाष्यकैयटविरोधादिति भावः। ददरिद्रतुः, ददरिद्रुः, ददरिद्रिथ, ददरिद्रथुः, ददरिद्र, ददरिद्रौ, ददरिद्रिव, ददरिद्रिम्। इति शम्।

## ५ प्रश्नोत्तराणि

उ०—स्वजते ष्वञ्ज् धातो लँटि आत्मनेपदे तप्रत्यये शपि च कृते "दंश सञ्ज स्वञ्जां शपि" इति नलोपे कृते स्वजते इति रूपं साधु।

परिसोढा—"सोढः" इत्यनेन षत्वस्य निषेधात् परिसोढा, इति साध्वेव। प्रज्वालयति । प्रोपसर्गात् ज्वलदीप्तौ—इत्यस्माद्धातोः घटादिषु पाठा मित्वाण्णौ ह्रस्वत्वेन प्रज्वालयति इत्यसाधुः ।

---

१९३०

१ पत्रम्

२—आङ्गकः, कालापाः, कौपिञ्जलः, चातुर्वैद्यः, याथाकथाचम्, एतानि प्राप्तिप्रदर्शनपुरो लेख्यानि ।

२—दशैकादशिकः, द्विशौर्पिकम्, कथमेते ? तद्धरतीत्यस्य कीदृशोऽर्थः किमुदाहरणञ्च तत्प्रदर्शय ।

३—समांसमीना, द्विमयम, परस्परम्, कथमेतानि ?

४—शर्कराशब्दाद् मत्वर्थीये कानि कानि रूपाणि चातुरर्थिकापेक्षया कश्चात्र विशेषः ।

५—चतुर्थादनजादौ चेति कारिका व्याख्येया ।

## १ प्रश्नोत्तराणि

उ०—आङ्गकः—अङ्गेषु भव इत्यर्थे बहुवचनविषयादङ्गशब्दादणि प्राप्ते "अवृद्धादपि बहुवचनविषयात्" इत्यनेन वुञि अनुबन्धलोपे "युवोरनाकौ" इत्यनेन वोरकादेशे "तद्धितेष्वचामादेः" इत्यादिवृद्धौ "यचि भम्" इति भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते आङ्गकः इति साधु ।

कालापाः—१० पृष्ठे द्रष्टव्यम् ।

कौपिञ्जलः—३४ पृष्ठे द्रष्टव्यम् ।

चातुर्वैद्यः—चतुरो वेदानधीते इति चतुर्वेदः । "तद्धितार्थोत्तरपदसमाहारे च" इति द्विगुसमासे । ततो अध्येत्यर्थे "तदधीते तद्वेद" इत्यनेन अणि अणो "द्विगोर्लुगनपत्ये" इति लुकि । चतुर्वेद एवेत्यर्थे स्वार्थे—"चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्" इति वार्तिकेन ष्यञि अनुबन्धलोपे भसंज्ञायां "यस्येति च" इत्यकारलोपे उभयपदवृद्धौ च प्रातिपदिकत्वात्सौ रुत्वविसर्गौ च कृते चातुर्वैद्यः इति साधु।

यथाकथाचम्—यथाकथा च दीयते कार्यं वेत्यर्थे यथाकथाच शब्दात् "तेन यथाकथा च हस्ताभ्यां णयतौ"इति सूत्रेण णप्रत्यये अनुबन्धलोपे णित्वादादिवृद्धौ भसंज्ञायां "यस्येति च"इत्यकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे यथाकथाचम् इति साधु ।

## ९ प्रश्नोत्तराणि

उ०—दशैकादशिकः—यत्र एकादशनिष्कान् अधिकान् प्रत्यर्पयेति समयं कृत्वा दशनिष्काः ऋणत्वेन दीयन्ते । तत्र ऋणत्वेन गृहीतादश निष्काः एकादशार्थत्वात् एकादशशब्देनोपचर्यन्ते । ततश्च एकादश च ते दश चेति कर्मधारये "संख्यायाः अल्पीयस्याः"इति दशन् शब्दस्य पूर्वनिपातः । "इहैव निपातनादकारः समासान्तः" ढिलोपे दशैकदशाः इति रूपम् । ततो दशैकादशान्प्रयच्छतीत्यर्थे "कुसीददशैकादशात्ष्ठन् ष्ठचौ" इति ष्ठचि ठस्येकादेशे भसंज्ञायां "यस्येति च"इत्यकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च—दशैकादशिकः इति रूपम् । एकादशनिष्कानधिकान् ग्रहीतुं दशनिष्कान् अधमर्णाय प्रयच्छतीति यावत् ।

द्विशौर्पिकम्—द्वाभ्यां शूर्पाभ्यां क्रीतमित्यर्थे "तद्धितार्थोत्तरपदसमाहारे च"इति द्विगुसमासे "शूर्पादञन्यतरस्याम्"इतिसूत्रेण प्राप्तस्याञष्ठञो "द्विगोर्लुगनपत्ये"इत्यनेन "अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्"इत्यनेन वा लुकि द्विशूर्पशब्दात् क्रीतेऽर्थे "इत उर्ध्वं तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि"इति वार्तिके अलुकीति ग्रहणात्तदन्तविध्यभावात् "शूर्पादञन्यतरस्याम्"इति अञोऽभावे "तेन क्रीतम्"इत्यर्थे ठञि अनुबन्धलोपे "परिमाणान्तस्यासंज्ञाशाणयोः" इत्युत्तरपदवृद्धौ ठस्येकादेशे भसंज्ञायां "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे द्विशौर्पिकम् इति साधु ।

तद्धरीति—वंशाद् भारादिभ्यः इत्येकवचनबहुवचनान्तयोर्सामानाधिकरण्यासम्भवाद्वैयधिकरण्येनान्वयः तथा च—वंशादिभ्यः परो यो भारशब्दस्तदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात् द्वितीयान्ताद्धरतीत्याद्यर्थेषु यथाविहितं प्रत्ययः स्यादिति सूत्रार्थः । तदुदाहरणं तु—वंशभारं हरति वहत्यावहति वा वांशभारिकः । इक्षुभारं हरति वहत्यावहरति वा—ऐक्षुभारिकः । यद्वा—भाराद्वंशादिभ्यः इत्यस्य

-व्याख्यान्तरं भारभूतेभ्यो वंशादिभ्यो हरति वहति आवहति इत्याद्यर्थेषु यथाविहितं प्रत्ययः स्यादिति सूत्रार्थः । अत्र सूत्रार्थे भारभूतान्वंशान्हरति वांशिकः । पैक्षु-कः । इत्याद्युदाहरणम् ।

## ३ प्रश्नोत्तराणि

उ०— समांसमीना १३ पृष्ठे द्रष्टव्यम् ।

द्विमयम्—यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्येत्यर्थे द्विशब्दात् "संख्याया गुणस्य निमाने मयट्" इत्यनेन मयट् प्रत्यये द्विमयम् इति रूपम् ।

परस्परम्—परशब्दस्य "कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये" इति द्वित्वे बहुलग्रहणादसमासवद्भावे "असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः" इति सौ रुत्वविसर्गयोः कृतयोः सत्वापवादमुपध्मानीयं बाधित्वा कस्कादित्वाद्विसर्गस्य सकारे प्रातिपदिकत्वात्सौ सोरमादेशे परस्परम् इति सिद्धम् ।

## ४ प्रश्नोत्तराणि

उ०—शर्कराशब्दादिति—शर्कराविद्यतेऽस्मिन्देशे इत्यर्थे शर्कराशब्दात् "देशे लुबिलचौ च" इत्यनेन । अण्—लुप्—इलच्—मतुपश्चत्वारः प्रत्ययाः भवन्ति तस्य च "शर्कराया वा" इत्यनेन विकल्पेन लुपि-"ठक्छौ च" इत्यनेन शर्कराशब्दादेतौ स्तः । तत्र कुमुदादौ वाराहादौ च पाठसामर्थ्यात् कुमुदादिभ्यः ठच् वाराहादिभ्यः कक् इति विशेषः । ततश्च—वाग्रहणसामर्थ्यात् पक्षे औत्स-र्गिकोऽण् । तस्य लुब्विकल्पः । तस्मादिह षड्रूपाणि ज्ञेयानि—तद्यथा—शर्करा अणो लुपि युक्तवद्भावे रूपम् । शार्करम् अणि रूपम् ।

शार्करिकम्—ठकि रूपम् । शर्करीयम्—छे रूपम् । शर्करिकम्—ठचि रूपम् । शार्करकम्—ककि रूपम् ।

शर्कराणां निवास इत्यर्थः । शर्कराभिः निर्वृत्तमिति वा ॥

## ५ प्रश्नोत्तराणि

उ०—"चतुर्थादनजादौ वा लोपः पूर्वपदस्य च ।
अप्रत्यये तथैवेष्टः उवर्णाल्ल इलस्य च ॥"

इति वक्ष्यमाणश्लोकं भङ्क्त्वा चतुर्थादच् इत्यादिवार्तिकरूपेण व्याचष्टे—

"चतुर्थादच ऊर्ध्वस्य लोपो वाच्य" इति । बृहस्पतिदत्त शब्दात् ठचि तस्येकादेशे चतुर्थादच उर्ध्वस्य दत्तशब्दस्य लोपे बृहस्पतिक इति । अनजादौ चेति वार्तिकभागं व्याचष्टे—"अनजादौ च विभाषा लोपो वक्तव्यः" द्वितीयादच एव अनुकम्पितो बृहस्पतिदत्त इति विग्रहे "बह्वचो मनुष्यनाम्नष्ठज्वा" इति । अनजादौ चेति पाठे विभाषेति भाष्यलब्धम् । तत्र देवदत्तको देवक इति क प्रत्यये दत्तशब्दस्य विकल्पोदाहरणात् सिद्धम् । लोपः पूर्वपदस्य चेति । विभाषेति शेषः । अनजादाविति तु नात्र सम्बद्ध्यते । तथाचाजादौ द्वितीयादच ऊर्ध्वस्य लोपे देवदत्तकः देवक इत्यादि "लोपः पूर्वपदस्य च" इति व्याख्यानेन दत्तिक इत्यादीनि ठचि घनि इलचि केच रूपाणि भवन्ति । अप्रत्यये तथैवेष्ट इति वार्तिकभागं व्याचष्टे । "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः" इति । दत्तः । देव इति । देवदत्तशब्दात् ठाजादि-प्रत्ययस्याप्यभावे पूर्वोत्तरपदयोर्क्रमेण लोपे रूपमिति श्लोकचतुर्थांशरूपम् "उवर्णा-ल्ल इलस्य च" इति तत्फलं भानुदत्तः भानुल इति अत्रेलप्रत्ययस्येकारस्य लोपे तत्सिद्धिः इति शम् ।

---

१९३०

## २ पत्रम् ।

१—कृञ्चानुप्रयुज्यते लिटि, इत्यत्र प्रत्याहाराश्रयणे मानं प्रदर्श्य कृभ्व-स्तीनामनुप्रयोगो भवति,सम्पदेस्तु नेत्यत्र वाचो युक्तिः प्रदर्शनीया।

२—षोपदेशधातून् तत्फलञ्च प्रदर्श्य 'दन्त्याजन्तसादयः' इत्यस्य लौ-किकविग्रहवाक्यञ्चोपदर्श्य अचकमत्, ऊर्णुनाव, अधुः, ईजतुः, एतेषां प्रयोगाणां साधनं यथाशास्त्रं विधेयम् ।

३—'विज्ञापना भर्तृषु सिद्धिमेति,' तज्ज्ञापयत्याचार्यः, इत्यत्र च 'मितां ह्रस्वः' इति कस्मान्न प्रवर्तते ।

४—सधि, जागर्यात् , प्राणिति, विश्वसेत् , ईयुः, पेड्ढ्वम् , अश्वः, बीभत्सते, प्रणिमयते, एषु केवलं विशेषकार्यं लेख्यम् ।

५—अविदोर्लिटि, व्येञ्वेञोर्लिटि प्रथमपुरुषे रूपाणि लिखित्वा 'आत्थ' इत्यत्रेडागमः 'जहि' इत्यत्र हेर्लुक् च कस्मान्न भवत इत्युच्यताम्।

## १ प्रश्नोत्तराणि

उ०—कृञ्चानुप्रयुज्यते लिटि" इत्यत्र कृञ् इति प्रत्याहाराश्रयणम् । अन्यथा यदीह कृञ् शब्देन एक एव धातुर्गृह्येत तदा धात्वन्तरस्य प्राप्त्यभावात् "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इति सूत्रेऽनुप्रयुज्यमानं कृञ इति विशेषणं व्यर्थं स्यात् । नचात्र कृञ् च इति चकारेणैवानुप्रयोगोऽन्यस्यापि ज्ञायत इति शङ्क्यम् । तस्य । धातोराम् स्यात् । अनुप्रयुज्यते च लिट्परः कृञ् इत्यर्थसमर्पकतया तस्योपक्षीणत्वात् । ततश्च—सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापि ज्ञायते । तेन "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" इत्यतः "कृञो द्वितीय तृतीयशम्बबीजात्कृषौ" ञकारेण प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः । एतच्च सर्वं भाष्ये स्पष्टम् । नन्वनुप्रयुज्यमानानां कृभ्वस्तीनां आम्प्रकृतिभूतानां च कथमन्वय इत्यत आह—तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः । सामान्यविशेषयोरभेदान्वयस्य न्याय्यत्वादिति भावः । धातूनामनेकार्थत्वादिति ज्ञेयम् ।

ननु "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" इति सूत्रेऽस्य "कृञो द्वितीय तृतीयशम्बबीजात्कृषौ" इति सूत्रस्य च मध्ये "अभिविधौ सम्पदा च" इति पठितम् । एवं च कृञ् प्रत्याहारे सम्पदोऽपि कुतो न ग्रहणमित्यत आह—सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते । सिद्धस्य वस्तुनो रूपान्तरापत्तिः सम्पदेरर्थः । एधादिधातोस्त्वाम् प्रकृतिभूतस्य वृद्ध्यादिरर्थः । तस्योभयोरपि विशेषरूपत्वेन सामान्यविशेषभावाभावेन अभेदान्वयासम्भवादित्यर्थः । अत एव "कृभ्वस्तीनां ग्रहणम्" इति भाष्यं सङ्गच्छत इति दिक् ।

## २ प्रश्नोत्तराणि

उ०—'सेकादन्योदन्त्याजन्तसादयः' एकाचः षोपदेशाः ष्वष्कस्विदूस्वदस्वञ्जपृस्मिङः । एते षोपदेशा धातवः । यदि हि धातुपाठे सकारस्यैव पाठस्यात्तर्हि इहादेशसकारत्वाभावात् षत्वं न स्यात् । षोपदेशे तु "धात्वादेः षः सः" इति षस्य सत्वे सति आदेशसकारत्वात् षत्वं सूपपादम् । "सेक् सृप् सृ स्तृ सृज स्तृभ्योऽन्ये दन्त्याजन्तसादयः । दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य सः दन्त्याजन्तः । दन्त्याजन्तश्चासौ सश्चेति दन्त्याजन्तसः स आदिर्येषां धातूनां ते दन्त्याजन्तसादयः ।

अचकमत्—२७ पृष्ठे द्रष्टव्यम् ।

ऊर्णुनाव—१८ पृष्ठे द्रष्टव्यम् ।

अधुः—धेट्पाने इत्यस्माद्धातो लुङि बहुवचनविवक्षायां झिप्रत्यये "आदेच उपदेशेऽशिति" इत्यात्वे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिचि इत्संज्ञायां "झेर्जुस्" इत्यनेन जुसि अनुबन्धलोपे "विभाषा घ्राधेट्शाच्छासः" इत्यनेन सिचो लुकि "उस्यपदान्तात्" इति पररूपे च कृते सकारस्य रुत्वे विसर्गे च कृते अधुः इति सिध्यति ।

ईजतुः—४२ पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि

उ०—विज्ञापना इति—मारणतोषणनिशामनेषुज्ञा इत्यत्र निपूर्वकात् शम् आलोचने इत्यस्मात् चौरादिकण्यन्तात् ल्युटि निष्पन्नस्य निशामनशब्दस्य चाक्षुषज्ञानमिति माधवः । उपसर्गवशादिहज्ञापने वृत्तिः, चाक्षुषत्वं च ज्ञानस्य न विवक्षितमिति ज्ञापनमात्रमित्यन्ये । मारणतोषणनिशानेषुज्ञेति पाठान्तरम् । निशानं तीक्ष्णीकरणम् । एष्वेवार्थेषु जानातिर्मित् । ज्ञा अवबोधने इति श्नाविकरणस्यैव मारणादिष्वर्थेषु णौ मित्वार्थमिहानुवादात् श्नाविकरण एवायमिति माधवः । जानातेः मित्वफलं तु—णौ ह्रस्वः—पशुं संज्ञपयति मारयतीत्यर्थः । हरिं ज्ञपयति । सन्तोषयतीत्यर्थः । रूपं ज्ञपयति माधवमते दर्शयतीत्यर्थः । मतान्तरे तु बोधयतीत्यर्थः । शरं ज्ञपयति । तीक्ष्णी करोतीत्यर्थः ।

ननु माधवमते—बोधयतीत्यर्थे ज्ञपयतीति कथं मित्वम् । तन्मते चाक्षुषज्ञानस्यैव निशामनशब्दार्थत्वादित्यत आह—"ज्ञप मिच्च" इति चुरादौ । एवं च चौरादिकं ज्ञा धातुमादाय बोधनेऽप्यर्थे ज्ञपयतीति ह्रस्वः सङ्गच्छते इति भावः ।

ननु चौरादिकस्यापि ज्ञपेर्मारणतोषणनिशामनेष्वेवार्थेषु मित्वमस्तु—तत्रार्थान्तरनिर्देशाभावात् । तथा च माधवमते कथं बोधनेऽर्थे मित्वमित्यत आह—ज्ञापनं मारणादिकं च तस्यार्थः । ज्ञापनं मारणं तोषणं निशामनं च तस्य चौरादिकस्य ज्ञप धातोरर्थो माधवमते इत्यर्थः । ज्ञाधातोर्ज्ञपधातोश्च णौ मित्वाद्ध्रस्वप्रसङ्गात् "कथं विज्ञापना भर्तृषु सिद्धिमिति" तज्ज्ञापयत्याचार्यः इति च । इति चेदुच्यते—माधवमते चाक्षुषज्ञाने मित्वाभावाद्ध्रस्वो नेत्यर्थः । विज्ञापनेत्यत्र तत् ज्ञापयतीत्यत्र च अचाक्षुषमेवाऽऽत्मज्ञानं विवक्षितमिति भावः ।

ननु ज्ञापनमात्रे मित्त्वमिति मते विज्ञापनेत्यत्र तज्ज्ञापयतीत्यत्र च मित्वं दुर्वारमित्यत आह—ज्ञापनमात्रे मित्वमिति मते तु—ज्ञा नियोगे इति चौरादिकस्यैव ग्रहणम् । "नान्येमितोऽहेतौ" इति निषेधान्न तस्य मित्वमिति । तस्मात् "विज्ञापनेति" ज्ञापयतीति च रूपमिति शेषः ।

ननु नियोगार्थस्य तस्य कथं ज्ञापने वृत्तिरित्यत आह—धातूनामनेकार्थत्वात् । मिच्चानेष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः—विज्ञापनेत्यत्र ज्ञापयतीत्यत्र च ज्ञापनार्थवृत्तित्वात् ज्ञापनस्य मारणतोषणतीक्ष्णीकरणान्यत्वाच्च तस्मिन्नर्थे ज्ञा धातौ मित्वप्रसक्तिरिति भावः ।

एवं च माधवमते बोधने ज्ञाधातोः ज्ञापयतीत्युपधायां दीर्घः । ज्ञपधातोस्तु ज्ञपयतीत्युपधा ह्रस्व इति रूपद्वयमपि साध्विति दिक् ।

## ४—प्रश्नोत्तराणि

सन्धि—१९ पृष्ठे द्रष्टव्यम् ।

जागर्यात्—जागृनिद्राक्षये इत्यस्माद्धातोराशीर्लिङि तिपि अनुबन्धलोपे "यासुट्परस्मैपदेषूदात्तो ङिच्च" इति यासुडागमे—इटावितौ "किदाशिषि" इत्यनेन यासुटः कित्वाद्गुणप्रतिषेधविषये "जाग्रोऽविचिण्णल्ङित्सु" इत्यनेन गुणे जागर्यात् इति सिद्ध्यति ।

प्राणिति—अन् प्राणने इत्यस्माद्धातो र्लटि तिपि शपि तस्य लुकि च कृते ("रुदादिभ्यः सार्वधातुके" इति तिप इटि कृते तस्य) प्र उपसर्गसमभिव्याहारे "अनितेः" इति सूत्रेण नकारस्य णत्वे कृते प्राणिति इति रूपं भविष्यति ।

विश्वसेत्—अस्मिन् प्रयोगे गणकार्यस्यानित्यत्वात् अदादिगणकार्यं शपो लुङ् न प्रवर्तते ।

ईयुः—इण् गतावित्यस्माद्धातो लिटि लकारे झिप्रत्यये "झेर्जुस्" इत्यनेन जुसि अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इति द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससञ्ज्ञायां कित्वाद्गुणाभावे इ इ उसिति स्थिते "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेनेयङि प्राप्ते "इणो यण्" इत्यनेनोत्तरखण्डस्येकारस्य "दीर्घ इणः किति" इत्यनेनाभ्यासस्य दीर्घे कृते सकारस्य रुत्वे विसर्गे च कृते ईयुः इति सिद्धम् ।

पेड्ढ्वम्—ईड् स्तुतावित्यस्माद्धातो र्लङ्लकारे आत्मनेपदे ध्वमि लुङ्लकीत्य-

डागमे प्राप्ते "आडजादीनाम्" इत्यनेन आडागमे अनुबन्धलोपे "आटश्च" इति वृद्धौ ष्टुत्वेन ढकारे ऐड्ढ्वमिति। ननु—यथा एकदेशविकृतन्न्यायेन ईडि-ध्वमित्यत्र "धासः से" इत्यनेन से कृते सशब्दस्य इटि ईडिध्व इति रूपम्। तथैव ईड्ढ्वम् इत्यत्र कथं नेट् ध्वेस्वरूपापेक्षया ध्वमित्यस्य एकदेशविकृतत्वादि-त्यत आह—"विकृतिग्रहणेन प्रकृतेरग्रहणात्"। प्रकृतिग्रहणे हि तदेकदेशविकृ-तस्य ग्रहणं भवति। ननु विकृतिग्रहणे तदेकदेशविकृताया अपि प्रकृतेर्ग्रहणम्। पुरुषमानय इत्युक्ते हि अन्धोऽनन्धो वा पुरुष एव आनीयते, अन्धमानय इत्यत्र तु अन्ध एवानीयते नत्वनन्धः। तथा च—प्रकृते ध्वमि एत्वे कृते ध्वे शब्दः। तेन च विकृतेन ध्वमित्यस्य तत्प्रकृतिभूतस्य न ग्रहणमिति नेडिति भावः।

अश्वः—४१ पृष्ठे द्रष्टव्यम्।

बीभत्सते—बधधातोः "बधेश्चित्तविकारे" इत्यनेनबधेश्चित्तविकारेऽर्थे "मान्ब-धदान् शान्भ्यो दीर्घश्चाभ्यासस्य" इति सनि अनुबन्धलोपे "एकाचो बशो-भष् झषन्तस्य स्ध्वोः" इत्यनेन बकारस्य भष्भावेन भकारे धकारस्य चर्त्वे च प्राप्ते भष्भावचर्त्वयोरसिद्धत्वाद् "सन्यङोः" इत्यनेन बध्इत्यस्य द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससञ्ज्ञायां "हलादिः शेषः" इत्यनेन लोपे "सन्यतः" इत्यनेना-भ्यासस्येत्वे "दीर्घो लघोः" इत्यनेन भ्यासस्य दीर्घे बीभत्स इति सन्नन्तस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसञ्ज्ञायां धातुत्वाल्लटस्तप्रत्यये "टित आत्मने पदानां टेरे" इत्येत्वे बीभत्सते इति साधु।

प्रणिमयते—प्रनि उपसर्गात् मेङ्धातो र्लटि आत्मनेपदे तप्रत्यये "तिङ्-शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसञ्ज्ञायां "कर्त्तरि शप्" इत्यनेन शपि अनुबन्धलोपे एकारस्यायादेशे "टित आत्मनेपदानां टेरे" इत्यादिना एत्वे कृते ततो "घुप्रकृतिमाङ्ग्रहणेनमेङोऽपि ग्रहणात्" "नेर्गदनदपतपदघुमास्यतिहन्ति-यातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च" इत्यनेन णत्वे प्रणिमयते इति साधु।

## ८—प्रश्नोत्तराणि

उ०—ब्रूविदोर्धातोर्लटिरूपाणि—आह, आहतुः, आहुः। पक्षे—ब्रवीति, ब्रूतः, ब्रुवन्ति। ब्रूते, ब्रुवाते, ब्रुवते। विदेर्लटि—वेद, विदतुः, विदुः। पक्षे—वेत्ति, वित्तः, विदन्ति। वेञ्धातोर्लिटि—उवाय, ऊयतुः,

ऊयुः । ऊवतुः ऊवुः, ववौ, ववतुः, ववुः, इति रूपाणि परस्मैपदे आ० तु, ऊये, ऊयाते, ऊयिरे, ऊवे, ऊवाते, ऊविरे, ववे ववाते, वविरे, इति । व्येञ्धातोर्लिटि—विव्याय, विव्यतुः, विव्युः, विव्ये, विव्याते, विव्यिरे इति रूपाणि ।

आत्थ—इत्यत्र सिपस्थलि कृते प्रकृतेराहादेशे आह थ इति स्थिते "आहस्थः" इत्यनेन "अलोऽन्त्यस्य" इति सूत्रसहकारेणान्तस्य हस्य थकारे आथ् थ इति स्थिते प्रथमथकारस्य "खरि च" इति चर्त्वे आत्थ इति रूपम् । न चात्र ब्रुव ईट्" इतीट् शङ्क्यः कृतेटि झलादित्वाभावेनाहस्थ इत्यप्रवृत्तेः ।

जहि—हन्तेर्हौ "हन्तेर्जः" इति जकारादेशे सति "अतो हेः" इत्यनेन प्राप्तो हेर्लुक् "असिद्धवदत्राभात्" इत्यनेनाभीयतया जादेशस्यासिद्धत्वेनातःपरत्वाभावान्नभवति । इति ।

---

१९३१

३ वर्षे १ पत्रम् ।

१—कास्तीरिकी, काच्छकं हसितम्, शारदोरोगः पूर्वपाटलिपुत्रकः, सौदामनी, विदारी, स्वापतेयम् । एते प्रयोगाः सूत्रनिदशपुरस्सरं व्याख्येया ।

२—दशैकादशिकी, छात्रः, शीर्षण्यः, तावतिकः, प्रतिकः, प्रास्थिकः कटाहः, पथिकी, एतान्यपि पूर्ववदेवसाध्यानि ।

३—वेष्यो नटः, स्तेयम्, अनुकामीनः, विंशम्, मरुतः, करिष्ठः, एतानि सविग्रहं प्रसाध्य "षषष्ठाजादिवत्सिद्धम्" इत्यस्य तात्पर्यं वर्णनीयम् ।

४—वध्रिका, अजाकृपाणीयः, सुरकः, कार्मणम्, राजसात्सम्पद्यते, एकैकया आहुत्या, एतानि रूपाणि सम्यक् प्रसाध्यन्ताम् ।

५—"शेषे" इति सूत्रस्य विधित्वमधिकारत्वञ्चोपपाद्य "दलद्वये टाबभाव" इत्यादिकारिका साधु व्याख्येया ।

# १–प्रश्नोत्तराणि

उ०—कास्तीरिकी—कास्तीरं नामवाहीग्रामः, तस्मिन् जात इत्यर्थे कास्तीरशब्दात् "वाहीकग्रामेभ्यश्च" इति सूत्रेण ठञि ठस्येकादेशे "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धौ भसञ्ज्ञायाम् "यस्येति च" इत्यनेनाकारलोपे ञित्वात् "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इत्यनेन ङीपि कृते प्रातिपदिकत्वात्सौ सो लोपे कास्तीरिकी इति सिध्यति ।

काच्छकं हसितम्—कच्छे जातमित्यर्थे कच्छशब्दात् "मनुष्यतत्स्थयोर्वुञ्" इत्यनेन वुञि अनुबन्धलोपे ञित्वादादिवृद्धौ "युवोरनाकौ" इत्यनेन वारकादेशे भसञ्ज्ञायाम् "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे काच्छकं हसितम् इति सिद्धम् ।

शारदो रोगः—शरदि भवो रोग इत्यर्थे शरच्छब्दात् "विभाषा रोगातपयोः" इति सप्तम्यन्ताच्छरच्छब्दात् पाक्षिकेऽणि णित्वादादिवृद्धौ प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि एकदेशविकृतमनन्यवदिति, सौरुत्वे विसर्गे च कृते शारदो रोगः इति साधु ।

पूर्वपाटलिपुत्रकः—पूर्वपाटलिपुत्रशब्दात् "रोपधेतोः प्राचाम्" इति सूत्रेण वुञि वोरकादेशे "प्राचां ग्रामनगराणाम्" इत्युत्तरपदवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च पूर्वपाटलिपुत्रकः इति सिध्यति । यद्यपि पाटलिपुत्रशब्दे उत्तरपदे आदिवृद्धिरेव, तथापि वृद्धिविधानमुत्तरपदवृद्धेः पूर्वपदस्य वृद्धिनिवृत्तिः फलम् ।

सौदामनि—२१ पृष्ठे द्रष्टव्यम् ।

विदारी—११ पृष्ठे द्रष्टव्यम् ।

स्वापतेयम्—स्वपतौ साधुरित्यर्थे स्वपतिशब्दात् "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञि प्रत्यये ढस्यैयादेशे ञित्वादादिवृद्धौ भसञ्ज्ञायाम् "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे स्वापतेयम् इति सिध्यति।

# २–प्रश्नोत्तराणि

२—उ०—दशैकादशिकी—५३ पृष्ठे द्रष्टव्यम् ।

छात्रः—छत्रं गुरुदोषाणामावरणं शीलमस्येति विग्रहे छत्रशब्दात् "छत्रा-

दिस्योणः" इति णप्रत्यये अनुबन्धलोपे णित्वादादिवृद्धौ भसञ्ज्ञायामाकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते छात्रः इति साधु ।

शीर्षण्यः—शिरसे हितमित्यर्थे शिरः शब्दात् "शरीरावयवाद्यत्" इति सूत्रेण यति प्रत्ययेऽनुबन्धलोपे "ये च तद्धिते" इत्यनेन शिरसः शीर्षन्नादेशे "नस्तद्धिते" इत्यनेन टिलोपे प्राप्ते "ये चाभावकर्मणोः" इति सूत्रेण प्रकृतिभावाट्टिलोपाभावे च प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च शीर्षण्यः इति सिध्यति ।

तावतिकः—तावता क्रीत इत्यर्थे तच्छब्दात् "यत्तदेतेभ्यः परिमाणे वतुप्" इतिसूत्रेण वतुपि अनुबन्धलोपे वत्वन्तस्य "बहुगणवतुडतिसंख्या" इतिसूत्रेण संख्यासञ्ज्ञायाम् "संख्यायाः अतिशदन्तायाः कन्" इति कनि "वतोरिड्वा" इत्यनेनेडागमे प्रातिपदिकत्वात्सौ रुत्वविसर्गे च तावतिकः इति साधु ।

प्रतिकः—कार्षापणेन क्रीत इत्यर्थे कार्षापणशब्दात् "कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा" इति वार्तिकेन टिठन् प्रत्ययेऽनुबन्धलोपे प्रत्यादेशे च कृते ठस्येकादेशे भसंज्ञायाम् "यस्येति च" इत्यनेनेकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च प्रतिकः इति सिध्यति ।

प्रास्थिकः—प्रस्थं सम्भवति प्रस्थं स्वस्मिन्समावेशयतीत्यर्थः इति विग्रहे प्रस्थ शब्दात् "सम्भवत्यवहरति पचति" इति सूत्रेण ठञि अनुबन्धलोपे ठस्येकादेशे ञित्वादादिवृद्धौ भसंज्ञायाम् "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च प्रास्थिकः इति सिध्यति ।

पथिकी—पन्थानं गच्छतीति विग्रहे "पथः ष्कन्" इति ष्कन् प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात् विभक्तिलोपे न लोपे च कृते "एकदेशविकृतमनन्यवत्" इति न्यायेन प्रातिपदिकत्वात् सौ पथिक इति स्त्रीत्वविवक्षायां षित्वात् ङीषि "यस्येति च" इत्याकारलोपे पथिकी इति साधु ।

## ३—प्रश्नोत्तराणि

उ०—वेष्यो नटः—वेषेण सम्पादीत्यर्थे वेषशब्दात् "कर्मवेषाद्यत्" इति यति प्रत्ययेऽनुबन्धलोपे भसंज्ञायाम् "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात्समर्थविभक्तिलोपे ततः सौ रुत्वे विसर्गे च वेष्यो नटः इति सिध्यति ।

**स्तेयम्**—स्तेनस्य भावः कर्म वेत्यर्थे स्तेनशब्दात्। "स्तेनाद्यन्नलोपश्च" इत्यनेन यत्प्रत्यये नेति समुदायस्य लोपे च कृते प्रातिपदिकत्वात् षष्ठ्या लुकि ततः सौ सोरमादेशे **स्तेयम्** इति सिध्यति।

**अनुकामीनः**—अनुकामं गामीत्यर्थेऽनुकामशब्दात् "अवारपारात्यन्तानुकामं गामी" इति सूत्रेण खप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यनेन खस्येनादेशे "यचि भम्" इत्यनेन भसंज्ञायाम् "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात् द्वितीयाया लुकि तत सौ रुत्वे विसर्गे च **अनुकामीनः** इति सिध्यति।

**विंशम्**—विंशतिः अस्मिन्नधिकमित्यर्थे विंशतिशब्दात् "शदन्तविंशतेश्च" इति सूत्रेण डे प्रत्यये "तिविंशतेर्डिति" इति तिशब्दस्य लोपे च कृते प्रातिपदिकत्वात्सुलोपे ततः सौ सोरमादेशे **विंशम्** इति। सिध्यति।

**मरुत्तः**—मरुतं न सहते मरुतां समूहे वेति विग्रहे मरुच्छब्दात् "तप्पर्वमरुद्भ्याम्" इत्यनेन तप्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वाद्विभक्तेर्लुकि ततः सौ रुत्वे विसर्गे च **मरुत्तः** इति सिध्यति।

**करिष्ठः**—अतिशयेन कर्तेत्यर्थे कर्तृशब्दात् "तुश्छन्दसि" इति सूत्रेण इष्ठनि "तुरिष्ठेमेयस्सु" इत्यनेन तृशब्दस्य लोपे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च **करिष्ठः** इति सिध्यति।

**"षषष्ठाजादिवचनात्सिद्धमिति"**—"कथं षडङ्गुलिदत्तः षडिक इति। अयम्भावः—यथा वाचिक इत्यत्र "एकाक्षरपूर्वपदानामुत्तरलोपो वक्तव्यः" इति वार्तिकेनोत्तरपदस्य आशीर्दत्तशब्दस्य लोपे सति वाचिक इति सिध्यति। तथैव षडिक इत्यत्रापि अङ्गुलिदत्तशब्दस्य लोपे सति इक्प्रत्ययाश्रितभत्वेन पदत्वाभावात् जश्त्वं दुर्लभं स्यात् कथं षडिक इति। समाधत्ते—"षषष्ठाजादिवचनात्सिद्धम् अयम्भावः—"ठाजावूर्ध्वं द्वितीयादचः" इति सूत्रसिद्धो द्वितीयादचः। ऊर्ध्वस्यैव लोपः नत्वयमुत्तरपदलोप इति वचनात् षडिक इति सिद्धमित्यर्थः। एवञ्च—षडङ्गुलिदत्तः इत्यत्र डकाराकारादूर्ध्वस्य लोपे सति, अकारान्तस्य भसंज्ञायां सत्यामपि "यस्येति च" इति लोपे सति तस्य स्थानिवद्भावेन अकारान्तस्य इकमाश्रित्य भत्वे सति तेन "अकारान्तमेतत् भसंज्ञाम्प्रति पदसंज्ञायाम्प्रति षकारान्तम्" इति भाष्यात् षकारान्तस्य पदत्वाव्याघाज्जश्त्वं निर्बाधमिति भावः।

स्पष्टञ्चेदं "स्वादिष्वसर्वनामस्थाने" इति सूत्रे भाष्ये इति ।

## ४—प्रश्नोत्तराणि

वध्रिका—वध्रिका चर्ममयी प्रतिकृतिः, तत्तुल्यो मनुष्योऽयमित्यर्थे वध्रिका-शब्दात् "संज्ञायां च" इति सूत्रेण विहितस्य कनो "लुम्मनुष्ये" इत्यनेन लुपि युक्तवद्भावात्स्त्रीत्वे टापि वध्रिका इति सिध्यति ।

अजाकृपाणीयः—अजागमनमिव कृपाणपतनमिव देवदत्तस्य वधः इति विग्रहे अत्र हि अजाशब्दोऽजागमनसदृशो देवदत्तागमने लाक्षणिकः । कृपाणशब्दश्च-कृपाणपतनसदृशो चोरागमने लाक्षणिकः । अजाकृपाणसमागमसदृशो देवदत्तचोर-समागमः समासार्थः । ततश्च अजाकृपाणशब्दादिवान्तरार्थे सदृशरूपेऽर्थे "समा-साच्च तद्विषयात्" इति सूत्रेण छप्रत्यये छस्येयादेशे प्रातिपदिकत्वात्सौ रुत्ववि-सर्गे च अजाकृपाणीयः इति सिद्ध्यति । तत्र समासात्मकाजाकृपाणशब्दभूतप्रकृ-त्यर्थरूपाजाकृपाणसमागमसदृशदेवदत्तचोरसमागमे उपस्थिते सति कृपाणपतनाजा मरणे उपस्थिते उपमानत्वम् , देवदत्तवधे चोरागमनकृते उपमेयत्वञ्च छप्रत्ययेन बोध्यते । कृपाणपतनप्रयुक्ताजामरणसदृशो देवदत्तवधश्चोरकृतः प्रत्ययार्थः अत-र्कितोपनतत्वं साधारणो धर्मं इति ।

सुरकः—सुरावर्णोऽहिरित्यर्थे सुराशब्दात् "सुराया अहौ" इति स्थूला-दिगणपठितसूत्रेण कनि अनुबन्धलोपे "केऽणः" इत्यनेन ह्रस्वे कृते प्रातिपदिक-त्वात्सौ रुत्वे विसर्गे च—सुरकः इति सिध्यति ।

कार्मणम्—कर्मैवेत्यर्थे कर्मशब्दात् "तद्युक्तात्कर्मणोऽण्" इत्यनेनाणि णित्वात् "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धौ भसंज्ञायाम् "नस्तद्धिते" इत्य-नेन टिलोपे प्राप्ते "अन्" इति सूत्रेण प्रकृतिभावेन निषेधे नकारस्य णत्वे च कार्मणम् इति सिध्यति । दूतवाक्यं श्रुत्वा तथैव यत्कर्म क्रियते तत्कार्मणं च्यते।

राजसात्सम्पद्यते—राजसात्सम्पद्यते इत्यत्र "तदधीनवचने" इति सूत्रेण साति प्रत्यये नलोपे च कृते राजसात्सम्पद्यते इति सिध्यति ।

एकैकया आहुत्या—४७ पृष्ठे द्रष्टव्यम् ।

## ५—प्रश्नोत्तराणि

शेषे इति लक्षणञ्चाधिकारश्चेति—३८ पृष्ठे द्रष्टव्यम् ।

दलद्वये टाबभाव इति कारिकाव्याख्यानम्—३७ पृष्ठे द्रष्टव्यम् ।

१९३१

२ पत्रम्

१—आनृजे, आञ्छ, सस्वरिव, जुगुप्सते, ऊयतुः। एते विशेषकार्य-प्रदर्शनेन संसाध्याः।

२—गुप्, गुह्, अनयोर्लुङि प्रथमपुरुषैकवचने कति रूपाणि तानि प्रदर्श्य साधनीयानि।

३—जक्षुः, समचस्खिष्ट, उर्णुनुविथ, अगौप्यत, स्ताव्, सुषुषुपतुः, एषां साधुत्वं साधु दर्शयत्।

४—अजागरीत्, शाधि, अनयोः साधुत्व निर्दिश्य "अयं सार्वधातुकमात्रविषयः, इत्यस्याशयः स्फुटं वर्णनीयः।

५—सार्वधातुके किं चिकीर्ष्यात् अस्याः पङ्क्तेराशयो वर्णनीयः।

## १—प्रश्नोत्तराणि

उ०—आनृजे—ऋजधातोर्लिट्लकारे आत्मनेपदे तप्रत्यये "लिटस्तझयोरेशिरेच्" इत्यनेन तकारस्यैशादेशे "असंयोगाल्लिट् कित्" इति लिटः कित्वाद्गुणाभावे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् 'उरत्" इत्यनेनात्वे रपरत्वे च कृते "हलादिः शेषः" इत्यनेन लोपे "अत आदेः" इत्यनेन दीर्घे-"नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते" तेन द्विहल्त्वात् "तस्मान्नुड् द्विहलः" इत्यनेन नुटि अनुबन्धलोपे—आनृजे इति सिद्ध्यति।

आञ्छ—आयाम् इत्यर्थकात् आञ्छधातोर्लिटि तिपि तिपो णलि च कृतेऽनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "ह्रस्वः" इत्यनेन ह्रस्वे अ आञ्छ अ इति स्थिते "अत आदेः" इति दीर्घे "अकः सवर्णे दीर्घः" इत्यनेन सवर्णदीर्घे आञ्छ इति रूपं सिद्धति ननु अत्र अ आञ्छ अ इत्यवस्थायाम् "अत आदेः" इति सूत्रेण दीर्घादेशे 'तस्मान्नुड् द्विहलः' इत्यनेन नुट्कथं नेत्याशङ्क्य परिहरति-"अत आदेः" इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम्। तेन दीर्घाभावाच्च नुडिति। अस्यायम्भावः—"ह्रस्वः' इति ह्रस्वे सर्वत्रैवाभ्यासे ह्रस्वस्य ग्रहणे दीर्घस्य व्यावृत्तिर्भविष्यति अतः "अत आदेः' इति सूत्रे अत इति—तपरकरणं व्यर्थं सत् स्वाभाविकस्यैव ह्रस्वाकारस्य परिग्रहार्थम्। तेन "अत आदेः" इति दीर्घविधौ स्वाभाविकह्रस्वा-

कारस्य ग्रहणेन "अत आदेः" इति दीर्घस्याभावाच्च जुडिति । तपरकरणं मुखसुखार्थमिति मते तु टि आनाञ्छ इति रूपं सिध्यति ।

सस्वरिव—स्वृ इत्यस्य धातुसंज्ञायाम्–धातुत्वाल्लिटि वधि "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन वादेशे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे अभ्यास 'ज्ञायासुरदत्वे "हलादिः शेषः" इत्यनेन लोपे स स्वृ व इति जाते "परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् "श्रयुकः किति" इत्यनेनेटि निषेधे प्राप्ते क्रादिनियमान्नित्यमिटि" "ऋतश्च संयोगादेर्गुणः" इत्यनेनानभ्यासस्य गुणे रपरत्वे च सस्वरिव इति साधु ।

जुगुप्सते—गुप् धातोः "गुप्तिज्किद्भ्यः सन्" इति सूत्रेण निन्दायां सनि "सन्यङोः" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इति चुत्वे जुगुप्सेति सन्नन्तस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् गुप्धातोरनुदात्तेत्वस्य केवलेऽचरितार्थ्यत्वात् तदन्तात् सन्नन्तादप्यात्मनेपदे लटि लटस्तादेशे सार्वधातुकसंज्ञायां "कर्तरि शप्" इत्यनेन शपि अनुबन्धलोपे "अतो गुणे" इत्यनेन पररूपे जुगुप्सते इति सिध्यति ।

ऊथतुः—१७ पृष्ठे द्रष्टव्यम् ।

## २ प्रश्नोत्तराणि

उ०—गुप्धातोर्लुङि—अगोपायीत्, अगोपीत्, अगौप्सीत्, इति त्रीणि रूपाणि भवन्ति ।

गुहूधातो लुङि—अगूहीत्, अघुक्षत्, अगूढ, अघुक्षत इति रूपाणि भवन्ति ।

तत्र अगोपायीदित्यत्र—गुप्धातो लुङि विवक्षिते लावस्थायामेव "आयादय आर्धधातुके वा" इत्यनेन विकल्पेनायप्रत्यये "पुगन्तलघूपधस्य च" इत्यनेन गुणे गोपाय इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां धातुत्वाल्लुङि-तिपि अडागमे अनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमे "इतश्च" इति तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इत्यनेन तिपः ईडागमे "इट ईटि" इत्यनेन सिचो लोपे सवर्णदीर्घे "अतो लोपः" इत्यकारलोपे च कृते अगोपायीत् इति साधु ।

आयप्रत्ययाभावपक्षे तु—ऊदित्वाद्वैकल्पिकेन "स्वरतिसूतिसूयतिधूञ्-दितो वा" इत्यनेनेडागमे "वदव्रजहलन्तस्याचः" इत्यनेन हलन्तलक्षणवृद्धौ प्राप्तायाम् "नेटि" इति सूत्रेण निषेधे अगोपीत् इति सिद्धम् । इडभावपक्षे तु—इटः परत्वाभावात्सिज्लोपाभावे । "वदव्रजहलन्तस्याचः" इत्यनेन हलन्तलक्षणावृद्धौ अगौप्सीत् इति सिद्धम् ।

अगूहीत्—गुहधातो लुंङ्लकारे तिप्प्रत्ययेऽनुबन्धलोपे "लुङ्लङ्लृङ्-क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिजागमेऽनुबन्धलोपे ऊदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन विकल्पेनेडागमे "इतश्च" इति तिप इकारलोपे "अस्तिसिचोऽपृक्ते" इत्यनेन ईटि "इट ईटि" इत्यनेन सलोपे "ऊदुपधाया गोहः" इत्युकारस्य ऊदादेशे सवर्णदीर्घे च कृते अगूहीत् इति सिध्यति । इडभावपक्षे तु "शल इगुपधादनिटः क्सः" इत्यनेन च्लेः क्सादेशे "हो ढः" इत्यनेन हस्य ढत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः" इत्यनेन गकारस्य भष्भावेन घकारे "षढोः कः सि" इत्यनेन ढस्य कत्वे "आदेशः प्रत्यययोः" इत्यनेन सस्य षत्वे कषसंयोगे क्षे अघुक्षत् इति सिध्यति । लुङस्तङि विशेषमाह—अगूढ—अ गुह त इति स्थिते क्सस्य कित्वेन गुणहेतुत्वाभावादजादित्वाभावाच्च ऊत्वाभावे "लुग्वा दुहदिहलिहगुहामात्मने पदे दन्त्ये" इत्यनेन क्सस्य लुकि अ गुह् त इत्यवस्थायाम् "होऽढः" इत्यनेन हस्य ढत्वे "झषस्तथोर्धोऽधः" इत्यनेन तकारस्य धकारे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे "ढो ढे लोपः" इत्यनेन पूर्वढकारस्य लोपे "ढ्लोपे पूर्वस्य दीर्घोऽणः" इत्यनेन दीर्घे च कृते अगूढ इति सिध्यति । क्सस्य लुगभावे तु पूर्ववदेव ढत्वभष्भावकत्वषत्वेषु अघुक्षत इति सिध्यति ।

## ३ प्रश्नोत्तराणि

उ०—जक्षुः—अद्धातो लिंटि झिप्रत्यये "लिट्यन्यतरस्याम्" इत्यनेन घस्लादेशे झेरुसि च कृते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे जघस् उस् इति स्थिते "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्यनेन उपधालोपे तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घकारस्य चर्त्वे "शासिवसिघसीनां च" इत्यनेन सस्य षत्वे जक्षुः इति सिध्यति ।

समचक्षिष्ट—व्यक्तायां वाचीत्यर्थकात् समुपसर्गात् चक्षधातोर्लुङि आत्मनेपदे त प्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे अनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ "वर्जनेक्शाञ् नेष्टः" इति वार्तिकेन क्शादेशाभावे "च्लेः सिच्" इत्यनेन सिचि इचाविती "आर्धधातुकस्येड्वलादेः" इत्यनेन इटि षत्वे ष्टुत्वे च कृते समचक्षिष्ट इति रूपं सिध्यति ।

ऊर्णुनुविथ—आच्छादनार्थक ऊर्णुञ् इत्यस्माद्धातोर्लिटि ( "ऊर्णोतेराम्नेति-वाच्यम्" इत्यामि निषिद्धे ) सिपि थलि "लिटि धातोरनभ्यासस्य" इत्यनेन "अजादेर्द्वितीयस्य" इति सूत्रसहायात् "नन्द्राः संयोगादयः" इति रेफस्य द्वित्वनिषेधे णत्वस्यासिद्धत्वान्नुशब्दस्य द्वित्वे पूर्वनकारस्य "रषाभ्यां नोणः समानपदे" इत्यनेन णत्वे द्वितीयस्तु "पूर्वत्रासिद्धीयमद्विर्वचने" इति तु, "उभौ साभ्यासस्य" इति सूत्रनिर्देशेन अनित्यत्वात्प्रवर्तते "आर्धधातुकस्येड्वलादेः" इतीडागमेऽनुबन्धलोपे "विभाषोर्णोः" इत्यनेन विकल्पेन इडादिप्रत्ययस्य ङित्सञ्ज्ञायाम् "क्ङिति च" इत्यनेन गुणनिषेधे "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेन उवङि ऊर्णुनुविथ इति सिध्यति । ङित्वाभावपक्षे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽवादेशे च ऊर्णुनविथ इति सिध्यति ।

अध्यैयत—अधि उपसर्गादध्ययनार्थकात् इङ्धातो लङि तत्स्थाने झप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडि प्राप्ते "आडजादीनाम्" इत्यतः प्रागेव परत्वादिकारस्येयङि अनुबन्धलोपे ततो "आडजादीनाम्" इत्याडागमे "आटश्च" इत्यनेन वृद्धौ यणि "आत्मनेपदेष्वनतः" इत्यनेन झस्यादादेशे च कृते अध्यैयत इति सिध्यति ।

स्तात—भुवीत्यर्थकात् अस्धातोर्लोटि ति प्रत्यये शपि तस्य लोपे च कृते "एरुः" इत्यनेन इकारस्योकारे "तुह्योस्तातङाशिष्यन्यतरस्याम्" इत्यनेन तातङि अनुबन्धलोपे "श्नसोरल्लोपः" इत्यनेन अल्लोपे स्तात् इति सिध्यति ।

सुषुषुपतुः—९ पृष्ठे द्रष्टव्यम् ।

## ४ प्रश्नोत्तराणि

उ०—अजागरीत्—निद्राक्षयार्थकात् जागृ इत्यस्माद्धातोर्लुङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे अनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ "च्लेःसिच्" इत्यनेन सिचि इचाविती "आर्धधातुकस्येड्व-

लादेः" इत्यनेनेडागमे अ जागृ इस् त् इति जाते यणि प्राप्ते तं प्रबाध्य "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे प्राप्ते तं प्रबाध्य "सिचि वृद्धिः परस्मैपदेषु" इत्यनेन वृद्धिप्राप्ते तं प्रबाध्य "जाग्रोऽविचिण्णल्ङित्सु" इत्यनेन गुणे तत्र कृते गुणे रपरत्वे च अजागर् इस् त् इति जाते तत्र "वदव्रजहलन्तस्याचः" इत्यनेन प्राप्तायाः वृद्धेः "नेटि" इत्यनेन निषेधे पुनः "अतो हलादेर्लघोः" इत्यनेन प्राप्तां वृद्धिं बाधित्वा "अतो ल्रान्तस्य" इत्यनेन वृद्धिः प्राप्ता तस्य च "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इत्यनेन निषेधे कृते "अस्तिसिचोऽपृक्ते" इतीटि—"इट ईटि" इत्यनेन सलोपे "अकः सवर्णे दीर्घः" इत्यनेन दीर्घे च कृते अजागरीत् इति सिध्यति । तदेवोक्तं मूले—

"गुणो वृद्धिर्गुणो वृद्धिः, प्रतिषेधो विकल्पनम्"
पुनर्वृद्धिर्निषेधोऽतो, यण्पूर्वाः प्राप्तयो नव"

शाधि—अनुशिष्टार्थकात् शास् इत्यस्माद्धातो लोटि सिपि तस्य "सेर्ह्यपिच्च" इत्यनेन ह्यादेशे शपि तस्य लुकि शास् हि इत्यवस्थायाम् "शा हौ" इत्यनेन शादेशे तस्य "असिद्धवदत्राभात्" इत्यनेनाभीयत्वेनासिद्धत्वात् "हुझल्भ्यो हेर्धिः" इत्यनेन हेर्धिरित्यादेशे शाधि इति सिध्यति ।

"अयं सार्वधातुकमात्रविषय इति—अस्य ख्याधातोः सार्वधातुके एव प्रयोगः नत्वार्धधातुके इत्यर्थः । कुत इत्यत आह—"सस्थानत्वं नमः ख्यात्रे" इति वार्तिकं तद्भाष्यं चेह लिङ्गम् । "चक्षिङः ख्याञ्" इति सूत्रे ख्यास्थाने "क्शाञ् इति वक्तव्यम्" अस्य शकारस्य "पूर्वत्राऽसिद्धम्" इत्यधिकारे यकारो वक्तव्य इत्युक्त्वा प्रयोजनं "सस्थानत्वं नमः ख्यात्रे" इत्युक्तं वार्तिके । तत्र नम्पदमध्याहृत्य नमःख्यात्रे इति सस्थानत्वं न भवतीति व्याख्यातं भाष्ये । तत्र सस्थानं नाम जिह्वामूलीय स न भवतीति तदर्थः । तदिदं वार्तिकं भाष्यं च ख्याधातोरस्य सार्वधातुके एवप्रयोग इत्यत्र ज्ञापकमिति । अर्थात्—सः जिह्वामूलीयः नमः ख्यात्रे इत्यत्र न भवतीत्येतत् ख्याआदेशस्य क्शादित्वविधौ शस्य यत्वविधौ च प्रयोजनमित्यर्थः । अत्र "शर्परे विसर्जनीयः" इति विसर्जनीय इष्टः सिद्ध्यति, जिह्वामूलीयस्त्वनिष्टो न भवतीति भाष्यवार्तिकहृदयम् । ख्याधातोरस्यार्धधातुकेऽपि प्रयोगसत्वे तु तृजन्ते ख्यातृशब्दे यकारस्य शकारस्थानिकत्वाभावात् "पूर्वत्रासिद्धम्" इत्यनेनासिद्धत्वाभावात् "शर्परे विसर्जनीयः" इत्यस्याप्र-

-इतो "कुप्वोः ≍क≍पौ च" इति जिह्वामूलीयो दुर्वारः स्यात् । ततश्चार्धधातुके सर्वत्र न ख्या धातोः प्रयोग इति विज्ञयेव, ज्ञापकस्य सामान्यापेक्षत्वात् तेन पुंख्यानमित्यत्र न "पुमः–खय्यम्परे" इति रुत्वमित्यादि सन्धावेवोक्तम् । नापि सुप्रख्येन निवृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीय इत्यत्र यत्वस्यासिद्धत्वेन "धन्व-योपधाद्वुञ्" इति वुञ् किन्तु छप्रत्ययएव । "सम्पूर्वस्य ख्यातेः प्रयोगो न" इति चाह न्यासकार इति शम् ।

## ५ प्रश्नोत्तराणि

उ०—सार्वधातुके किं चिकीर्ष्यादिति—ननु "अतो येयः" इत्यत्र "रुदादिभ्यः सार्वधातुके" इत्यतः सार्वधातुकग्रहणानुवृत्त्यभावेऽपि—अतः परस्य या इत्यस्य इय् स्यात् इत्यर्थेन सकलेष्टसिद्धौ सार्वधातुकग्रहणानुवृत्तिः व्यर्था इति चेन्न' तथा सति भव या त् इति स्थिते "अतो येयः" इत्येनं बाधित्वा "अतो दीर्घो यञि" इति दीर्घापत्तेः "अतो येयः" इति तु आर्धधातुके चिकी-र्ष्यादित्यादौ अतो लोपं बाधित्वा चारितार्थम् । नचात्र—"अतो लोपः" इत्यने-नाकारलोपेऽतः परत्वाभावादेवेय् न स्यादिति वाच्यम् । तन्न । मध्येऽपवादन्यायेन हि मध्ये पठिताः येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरानित्यनेन "अतो येयः" इति "अतो लोपः" इत्यस्यैव बाधक इत्यौचित्यात् । अतः सार्वधातुकग्रहणमति-व्याप्तिदोषपरिहाराय कर्त्तव्यम् । कृते तु सार्वधातुकग्रहणे चिकीर्ष्यादित्यादौ आर्ध-धातुकत्वेन "अतो येयः" इत्यस्याप्रवृत्त्या निरवकाशत्वात् "अतो दीर्घो यञि" इत्यस्यैव बाध इत्यदोषादिति दिक् ।

---

१९३२

३ वर्षे १ पत्रम् ।

सिद्धान्तकौमुद्याः शैषिकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१—श्रावणः, शौण्डिकः, पायसिकः, सैरिकम्, पार्यास्तिकः, वैव-धिकः, धानुष्कः, विश्वजनीनम्, अत्र विभक्तिप्रत्ययतदर्थविधा-यकसूत्राण्युपन्यस्य प्रदर्शनीयाः ।

२—हैसमिकः, अपटुत्वम्, सर्वपथीनः, व्रातीनः, चिक्किनम्, छिम-

थम्, गर्दभाण्डः, विषपुष्पकः, विषुणः, द्विशतकम्। साधनीयाः इमे प्रयोगाः, प्रदर्शनीयाश्चैतेषां लौकिकविग्रहाः।

३—"शताच्च ठन्यतावशते" इति कीदृक्सूत्रं षड्विधसूत्रमध्ये।

४—शर्कराः सन्त्यस्मिन्देशे, पूर्वासु वर्षासु जातः, दत्तस्य इदम् (अपत्यम्) इति विग्रहेषु रूपाणि परिनिष्ठितानि प्रदर्श्य चातुरर्थिकान्तभागस्था विशेषश्चेदुपपाद्यताम्?

५—सद्यःपरुत्परारीति सूत्रं सकलं विलिख्य सोदाहरणं व्याख्यायताम्।

६—दलद्वये टाबभाव इति कारिका प्रमाणोदाहरणोपन्यासपूर्वकं व्याख्यायताम्।

## १—प्रश्नोत्तराणि

उ०—श्रावणः—श्रवणायां जात इत्यर्थे "तत्र जातः" इति, अणि तस्य "नक्षत्रेभ्यो बहुलम्" इति लुकि "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययस्यापि लुकि प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च श्रावणः इति सिद्ध्यति।

शौण्डिकः—शुण्डिकादागत इति विग्रहे पञ्चम्यन्तात् शुण्डिकशब्दात् "शुण्डिकादिभ्योऽण्" इत्यनेनाण्प्रत्यये अनुबन्धलोपे णित्वादादिवृद्धौ प्रातिपदिकत्वात् ("सुपोधातुप्रातिपदिकयोः" इति विभक्ते लुकि पुनः) सौ रुत्व-विसर्गे च शौण्डिकः इति सिध्यति।

पायसिकः—पयो भक्तिरस्येत्यर्थे—प्रथमान्तात् पयस् शब्दात्—"अचित्ताद्देशकालाट्ठक्" इत्यनेन ठकि प्रत्ययेऽनुबन्धलोपे ठस्येकादेशे—"किति च" इत्यनेनादिवृद्धौ प्रातिपदिकत्वात् विभक्ते लुकि पुनः सौ रुत्वे विसर्गे च पायसिकः इति साधुः।

सैरकम—सीरस्येदमित्यर्थे षष्ठ्यन्तात् सीरशब्दात्—"हलसीराट्ठक्" इत्यनेन ठकि अनुबन्धलोपे ठस्येकादेशे—"किति च" इत्यनेनादिवृद्धौ प्रातिपदिकत्वात् (विभक्तेर्लुकि पुनः) सौ सोरमादेशे—सैरिकम् इति साधु॥

पार्यासिकः—पर्यासमाह इत्यर्थे द्वितीयान्तात् पर्यासशब्दात्—"आहौ प्रभूतादिभ्यः" इति वार्तिकेन ठक्प्रत्ययेऽनुबन्धलोपे ठस्येकादेशे "किति च" इत्यनेनादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च पार्यासिकः इति साधुः।

वैवधिकः—विवधेन हरतीत्यर्थे विवधशब्दात् "विभाषा विवधात्"

इति सूत्रेण ठकि अनुबन्धलोपे ठस्येकादेशे "किति च" इत्यनेनादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च वैवधिकः इति साधुः ।

धानुष्कः—धनुः प्रहरणमस्येत्यर्थे धनुः शब्दात् "प्रहरणम्" इत्यनेन ठकि "इसुसुक्तान्तात्कः" इत्यनेन ठस्य कादेशे—"किति च" इत्यनेनादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते धानुष्कः इति साधुः ।

विश्वजनीनम्—३५ पृष्ठे द्रष्टव्यम् ।

## २—प्रश्नोत्तराणि

उ०—द्वैसमिकः—द्विसमामधीष्टो भृतो भूतो भावीवेत्यर्थे द्विसमाशब्दात् "द्विगोर्वा" इत्यनेन विकल्पेन खप्रत्ययस्य विधानात् तदभावे "प्राग्वतेष्ठञ्" इत्यनेन ठञि अनुबन्धलोपे ठस्येकादेशे "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धा भसञ्ज्ञायाम् "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात् विभक्तेर्लुकि पुनः सौ रुत्वे विसर्गे च द्वैसमिकः इति साधुः ।

अपटुत्वम्—न पटुरपटुः तस्य भाव इत्यर्थे नञ्तत्पुरुषात् अपटुशब्दात् "इगन्ताच्च लघुपूर्वात्" इत्यनेन अणि प्राप्ते "न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः" इत्यनेन तन्निषेधे भावे त्वे प्रत्यये प्रातिपदिकत्वात्सौ सोरमादेशे अपटुत्वम् इति सिध्यति ।

सर्वपथीनः—सर्वश्चासौ पन्थाश्चेति विग्रहे "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इत्यनेन समासे "ऋक्पूरब्धूःपथामानक्षे" इत्यनेन समासान्तेऽच्प्रत्यये निष्पन्नात् सर्वपथशब्दात् सर्वपथान् व्याप्नोतीत्यर्थे "तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति" इत्यनेन ख प्रत्यये खस्येनादेशे भसंज्ञायाम् "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात् विभक्तेर्लुकि पुनः सौ रुत्वे विसर्गे च सर्वपथीनः इति साधु ।

व्रातीनः—नानाजातीयानाम् अलब्धजीवनद्रव्याणां भारवहनादिकष्टकर्मजीविनां सङ्घो व्रातः । तस्य यज्जीवनार्थं कष्टं कर्म तदिहव्रातम् । व्रातेन शरीरायासेन जीवतीत्यर्थे व्रातशब्दात् "व्रातेन जीवति" इत्यनेन खञि अनुबन्धलोपे खस्येनादेशे ञित्वादादिवृद्धौ भसंज्ञायाम् "यस्येति च" इत्यकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च व्रातीनः इति सिध्यति ।

चिकिनम्—नासिकाया नतमित्यर्थे निशब्दात् नासिकाया नतेऽभिधेये

"इनच्पिटच्चिकचि च" इत्यनेन इनचि प्रत्यये तत्संनियोगशिष्टे निशब्दस्य चिकादेशे च कृते भसंज्ञायामकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे चिक्किनम् इति सिध्यति ।

द्विमयम्—यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य इत्यर्थे द्वि शब्दात् "संख्याया गुणस्य निमाने मयट्" इत्यनेन मयट् प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे च कृते द्विमयम् इति सिध्यति ।

गर्दभाण्डः—गर्दभाण्डशब्दोऽस्मिन्नस्तीत्यर्थे गर्दभाण्डशब्दात् "अध्यायानुवाकयोर्लुक्" इति सूत्रेण छप्रत्ययस्य लुग्विधानारम्भसामर्थ्यात् छप्रत्ययोऽपि भवतीति बोध्यते । तस्य च छप्रत्ययस्य उक्तसूत्रेण लुकि प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च गर्दभाण्डः इति सिद्धति ।

विषपुष्पकः—विषपुष्पैर्जनितो रोग इति विग्रहे विषपुष्पशब्दात् "कालप्रयोजनाद्रोगे" इति कनि प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विषपुष्पकः इति सिध्यति ।

विषुणः—विष्वक् अस्यास्तीति लौकिकविग्रहे–तत्र विषु अच्च इत्यलौकिकविग्रहे वाक्ये च "विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः" इति पामादिगणपठितगणसूत्रेण न प्रत्यये उत्तरपदस्याच्च इत्यस्य च लोपे च कृते णत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विषुणः इति साधुः ।

द्विशतकम्—द्विशतेन क्रीतमित्यर्थे "शताच्च ठन्यतावशते" इत्यत्र असमासपदानुवृत्तिसामर्थ्यात् ठन्यतोरभावे "संख्याया अतिशदन्तायाः कन्" इति सूत्रेण कनि अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे द्विशतकम् इति सिध्यति

## ३ प्रश्नोत्तराणि

उ०—"शताच्चठन्यतावशते" इति सूत्रस्य "आर्हीयेष्वर्थेषु असमासे वर्तमानात् शताठ्न्यतौ स्तः नतु शतेऽर्थे इति सूत्रार्थः । तथा च 'संज्ञा च परिभाषा च विधिर्नियम एव च, अतिदेशोऽधिकारश्च षड्विधं सूत्र लक्षणम्' । इत्यभियुक्तोक्तषड्विधसूत्रेषु किमात्मकमिदं सूत्रमिति सन्देहे—पूर्वोक्तसूत्रार्थेनास्य "साक्षाल्लक्ष्यसंस्कारकसाधुत्वप्रकारकबोधजनकत्वरूपस्य सत्वात् विधित्वमेवास्य वक्तुमुचितम् ।

## ४ प्रश्नोत्तराणि

उ०—"पूर्वासु वर्षासु जात इति विग्रहे पौर्ववार्षिकः इति रूपम् ।

दक्षस्यापत्यमिति विग्रहे दाक्षिः इति रूपम् । शर्करासन्त्यस्मिन्देशे तु शर्करा शर्करिलः "शार्करः" "शर्करावान्" इति चत्वारि रूपाणि ज्ञेयानि । चातुरर्थिकप्रत्यये तु "शर्करा" शार्करम् शार्करिकम् "शर्करीयम्" शर्करिकम् शार्करिकम् इति षड्रूपाणीह भवन्ति । अत्र "ठक् ढच्—छ—क-प्रत्ययेषु विशेषः ।

## ५ प्रश्नोत्तराणि

उ०—"सद्यःपरुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः" इतीदं सूत्रम् । एते पूर्वोक्ताः सूत्रोच्चरिताः शब्दाः कालविशेषे अर्थे निपात्यन्ते । तत्र ।

सद्यः इत्यत्र समानेऽहनि "समानस्य स भावो द्यस् चाहनि" इति भाष्यवचनात्—अर्हवृत्तेः समानशब्दात् सप्तम्यन्तात् द्यस् प्रत्यये समानस्य सभावश्च निपात्यत इति ।

परुत्—"पूर्वपूर्वतरयोः परः, उदारी च संवत्सरे" इति भाष्यात् "संवत्सरेऽभिधेये सप्तम्यन्तादेतौ प्रत्ययौ स्तः । उदारीत्यत्र उच्च आरिश्चेति समाहारद्वन्दः ।

ऐषमः—"इदमः इश् समसण् प्रत्ययश्च संवत्सरे" इति भाष्यवचनात्—समसणि णकार इत् । सकारादकारः उच्चारणार्थः । णित्वादादिवृद्धौ ।

परेद्यवि—"परस्मादेद्यव्यहनि" इति भाष्यात् सप्तम्यन्तात् एद्यविरिकारान्तः प्रत्ययः ।

अद्य—"इदमोऽश् भावो द्यश्च"इति भाष्यात् सप्तम्यन्तात् अकारान्तेद्ये प्रत्यये "पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्यः" इति भाष्यात् कालविशेषरूपार्थेषु पूर्वादिभ्योऽद्युसि प्रत्यये पूर्वेद्युरित्यादि सिद्ध्यन्ति ।

## ६ प्रश्नोत्तराणि

उ०—द्लद्वये टाबभाव इति—३७ पृष्ठे द्रष्टव्यम् ।

---

१९३२

३ वर्षं २ पत्रम् ।

१—भविता, एधाञ्चकृषे, देधे, ऊखतुः, विव्यतुः, स्यन्त्स्यति, तत्त-द्विशेषकार्योपन्यासपुरस्सरमेतानि रूपाणि सम्यग् साधयत ।

२—"तस्माणुड्द्विहलः" इति सूत्रे ॠकारैकदेशस्य रेफस्य हल्त्वेन ग्रहणे, द्विहलग्रहणस्यानेकहलुपलक्षणत्वे च प्रमाणं प्रदर्शयत ।

३—षोपदेशणोपदेशपरिगणनवाक्ये व्याख्याय तयोः फलं साधु प्रदर्शयत ।

४—गाङ्, स्रंसु, गुह, कृष, ह्वेञ, धातूनां लुङि प्रथमपुरुषैकवचने रूपाणि विशेषशास्त्रनिर्देशपूर्वकं साध्यन्ताम् ।

५—अड्, चक्षिङ्, ऊर्णुञ्, ब्रूञ्, इङ्, ञिष्वप्, दरिद्रा धातूनां लिटि प्रथमपुरुषैकवचने रूपाणि विविच्य प्रसाधयत ।

६—जहि, ऐड्डूत्रम्, आत्थ, अध्यैयत, विदाङ्कुरु, अजागरीत्, एतेषां साधनोपायं साधूपपादयत ।

## १ प्रश्नोत्तराणि

उ०—भविता—भूधातोर्लुटि तिपि—"स्यतासी लृलुटोः" इत्यनेन तासि, "लुटः प्रथमस्य डारौ रसः" इत्यनेन तिपस्थाने डादेशे डित्वसामर्थ्यादभ-स्यापि टेर्लोपे तासित्यस्य "आर्धधातुकं शेषः" इत्यनेन अर्धधातुकसंज्ञायाम्। "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे "एचोऽयवायावः" इत्यनेनावादेशे च "भवित् आ इति स्थिते अत्र "पुगन्तलघूपधस्य च" इत्यनेन गुणे प्राप्ते "दीधीवेवीटाम्" इत्यनेन निषेधे भविता इति सिध्यति ।

एधाञ्चकृषे—एध्धातो लिटि "इजादेश्च गुरुमतोऽनृच्छः" इत्यामि "आमः" इत्यनेन लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन कृञनुप्रयोग-कल्पिट्प्रयोगे "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इत्यनेनानुप्रयुज्यमानात्कृञोऽ-प्यात्मनेपदे मध्यमपुरुषैकवचने थासि "थासः से" इत्यनेन से आदेशे 'एधाम् कृ से इति स्थिते—असंयोगाल्लिट् कित्" इत्यनेन कित्संज्ञायाम् कित्वाद्गुणा-भावे ततो द्वित्वात्परत्वाद्यणि प्राप्ते "द्विर्वचनेऽचि" इत्यनेन निषेधे पूर्वं द्वित्वे

कृतेऽभ्याससंज्ञायाम् "उरत्" इत्यनेनादादेशे रपरत्वे च कृते "हलादिः शेषः" इत्यनेन लोपे "एधाम् क कृ से इति जाते "कुहोश्चुः" इत्यनेन चुत्वे "एकाच उपदेशेऽनुदात्तात्" इत्यनेनेण् निषेधे "आदेशप्रत्यययोः" इत्यनेन षत्वे एधामिति मकारस्यानुस्वारे परसवर्णे च कृते एधाञ्चकृषे इति सिध्यति ।

दध्रे—धारणार्थकात् दध्धातो लिटि आत्मनेपदे तप्रत्यये तकारस्य "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे प्राप्ते "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्यनेन एत्वाभ्यासलोपयोः देधे इति सिध्यति ।

नन्वत्र "अभ्यासे चर्च" "झलां जश् झशि" इत्यादिकं लिण्निमित्तादेशस्यैव सत्वात् एत्वाभ्यासलोपौ—कथमिति वाच्यम् । तन्न । "न शसददवादिगुणानाम्" इत्यनेन शसिदयोः प्रतिषेधवचनाज्ज्ञापकात्-आदेशशब्देन स्थान्यपेक्षया विरुपादेशस्यैव ग्रहणात् । तस्य चात्राभावात् । तेन प्रकृतिजशश्चरां तेषु सत्स्वपिएत्वाभ्यासलोपौ स्त एवेति शम् ।

ऊखतुः—४० पृष्ठे द्रष्टव्यम् ।

विव्यतुः—८ पृष्ठेद्रष्टव्यम् ।

स्यन्त्स्यति–प्रस्रवणार्थकात् स्यन्दूधातोर्लृटि लकारे 'स्यतासी लृलुटोः' इत्यनेन स्य प्रत्यये "वृद्भ्यः स्यसनोः" इत्यनेन विकल्पेन परस्मैपदे कृते तिपि परत्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन ऊदिल्लक्षणेड्विकल्पमपि बाधित्वा "न वृद्भ्यश्चतुर्भ्यः" इत्यनेनेण्निषेधे "खरि च" इति चर्त्वे स्यन्त्स्यति इति सिध्यति । नचात्र "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया सकारादिविशेषापेक्षया तदभावनिमित्तापेक्षया च "न वृद्भ्यश्चतुर्भ्यः" इति निषेधस्य बहिरङ्गतया तदपेक्षयाऽन्तरङ्गतया ऊदिल्लक्षणस्येड्विकल्पस्यैव वक्तुमौचित्येनोक्तरूपमयुक्तमिति वाच्यम् । तन्न । "न वृद्भ्यश्चतुर्भ्यः" इति सूत्रे चतुर्ग्रहणसामर्थ्यादन्तरङ्गस्यापीटो बाधात् । अत्रोदिल्लक्षणे कृते इड्विकल्पेहि सूत्रे चतुर्ग्रहणमेव व्यर्थं स्यादिति दिक् ।

## २—प्रश्नोत्तराणि

उ०—"तस्मान्नुड् द्विहलः" इति सूत्रे ऋकारैकदेशो रेफो हल्त्वेन गृह्यते तेन द्विहल्त्वान्नुडिति प्रागुक्तम् । तत्र प्रमाणं तु "एओङ्" "ऐऔच्" इति

सूत्रे भाष्ये "नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम्" इति प्रतिपाद्य तत्तर्हि कर्तव्यं न कर्त्तव्यं "वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते" इत्यादिना समर्थितम्। इदमेव च तत्र प्रमाणं भविष्यति। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वे च द्विग्रहणमेव प्रमाणम्। अन्यथा हल इत्येव कुर्यात्, आत, आटेत्यादौ एकहल्धातुषु तु न कोपि दोषः, अश्नोतेश्चेति नियमात् तस्मादुक्तार्थे प्रमाणं दर्शितम्।

## ३—प्रश्नोत्तराणि

उ०—णोपदेशास्तु—अनर्द-नाटि-नाथ-नाध-नन्द-नक्क नृ-नृतः। इति भाष्ये उक्तम्। नाटेर्दीर्घोईस्य पर्युदासाद्धटादिर्णोपदेश एव। तवर्गचतुर्थान्तनाधतेर्नृनयोश्च, केचिण्णोपदेशतामाहुः। तत्फलन्तु—प्रणदतीत्यादौ "उपसर्गादसमासेऽपि णोपदेशस्य" इति सूत्रेण णत्वविधानात्। सेक्-सृप-सृ-स्तृ-सृज् स्तृ-स्त्यान्ये दन्त्याजन्तसादयः। एकाचः षोपदेशाः ष्वष्क-स्विद्-स्वद्-स्वञ्ज-स्वप्-स्मिङो धातवः सन्ति। षोपदेशफलन्तु—निषेधतीत्यादौ पूर्वं "धात्वादेः षः सः" इत्यनेन षकारस्य सकारे जाते तदनन्तरम् "आदेशप्रत्यययोः" इत्यनेन षत्वे प्राप्ते तस्य च "सात्पदाद्योः" इत्यनेन निषेधे कृते पुनः "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इत्यनेन षत्वं सिध्यतीति दिक्।

## ४—प्रश्नोत्तराणि

उ०—गाहूधातोर्लुङि तकारे—अगाहिष्ट-अगाढ इति रूपद्वयम्। तत्र—अगाहिष्ट—इत्यत्र-ऊकारेत्संज्ञक गाहूधातो लुङि आत्मनेपदे तप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिच् प्रत्यये इचावितौ ऊदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन विकल्पेनेडागमे "आदेशप्रत्यययोः" इत्यनेन षत्वे तकारस्य "ष्टुना ष्टुः" इति ष्टुत्वे अगाहिष्ट इति रूपम्। इडभावे त्वाह—अगाढ इति—अत्र इडभावपक्षे अगाह स् त इति स्थिते पूर्वं "झलो झलि" इत्यनेन सलोपे ततो "होढः" इत्यनेन हस्य ढत्वे "झषस्तथोर्धोऽधः" इत्यनेन धकारे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे "ढो ढे लोपः" इत्यनेन पूर्व ढकारस्य लोपे च कृते अगाढ इति रूपं त्र सिध्यति। नन्वत्र सलोपात्पूर्वं भष्भावो कुतो नेति चेन्न। सलोपात्पूर्वं भष्भावस्तु

न भवति । भष्भावस्यासिद्धतया "झलो झलि" इति सलोपस्य पूर्वं प्रवृत्तेः । न च कृतेऽपि सलोपे "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्यनेन प्रत्ययलक्षणतया सकारपरकत्वात् भष्भावो दुर्वारमिति वाच्यम् । तन्न । "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" इति परिभाषया वर्णनिमित्तके कार्ये प्रत्ययलक्षणाभावात् इति दिक् ।

स्रंसुधातो लुंङि प्रथमपुरुषैकवचने अस्रसत्, अस्रंसिष्ट इति रूपम् । तत्र स्रंसु धातोर्लुङि द्युतादित्वादस्य "द्युद्भ्यो लुङि" इत्यनेन वैकल्पिकपरस्मैपदे तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इति च्लौ–तस्य "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इत्यङि "अनिदितां हल उपधायाः क्ङिति" इत्यनेन नलोपे अस्रसत् इति रूपं सिध्यति । परस्मैपदाभावे तु आत्मनेपदे त प्रत्यये अस्रंस् त इति जाते "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिचि इचावितौ "आर्धधातुकस्येड्वलादेः" इत्यनेन इटि "आदेशप्रत्यययोः" इत्यनेन सस्य षत्वे ष्टुत्वेन तकारस्य टकारे च अस्रंसिष्ट इति सिध्यति ।

गुहू धातोर्लुङि—अगूहीत् । अघुक्षत्, अगूढ, अघुक्षत, इति रूपाणि । तत्र संवरणार्थकगुहधातो लुंङि तिपि अनुबन्धलोपे अडागमे च्लौ सिचि कृते ऊदित्वाद्विकल्पेन "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन इडागमे 'ऊदुपधायाः गोहः' इत्यनेन उकारस्य दीर्घोकारे 'अस्तिसिचोऽपृक्ते' इत्यनेन च ईटि कृते "इट ईटि" इति सलोपे अगूहीत् इति रूपं सिध्यति । इडभावे तु "शल इगुपधादनिटः क्सः" इत्यनेन क्सादेशे ढत्वभष्भावकत्वषत्वादिकार्येषु कृतेषु अघुक्षत् इति रूपं सिध्यति । लुङस्तङि विशेषमाह—अगूढ इति अत्र अगुह् स त इति स्थिते क्सस्य कित्वेन गुणहेतुत्वाभावादजादित्वाभावाच्च ऊत्वाभावे "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति क्सस्य लुकि अगुह् त इति स्थिते तत्र ढत्वधत्वष्टुत्वढलोपदीर्घेषु कृतेषु अगूढ इति । क्सस्य लुगभावे तु ढत्वभष्भावकत्वषत्वेषु कृतेषु अघुक्षत इति सिध्यति ।

कृषधातो लुंङि प्रथमपुरुषैकवचने-अक्राक्षीत् । अकार्क्षीत्, अकृक्षत्, इति रूपाणि । तत्र अक्राक्षीत् इत्यत्र कृषधातोर्लुङि तिपि अनुबन्धलोपे अडागमे "च्लि लुङि" इति च्लौ "शल इगुपधादनिटः क्सः" इत्यनेन क्सादेशे प्राप्ते "स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः" इति वार्तिकेन विकल्पेन क्सादेशं बाध्य

सिचि कृते "आर्धधातुकस्येड्वलादेः" इति सिचः प्राप्तस्येटः "एकाच उपदेशेऽनुदात्तात्" इति निषेधे "अस्तिसिचोऽपृक्ते" इत्यनेन ईटि "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इत्यनेन अमि ऋकारस्य यणि "वदव्रजहलन्तस्याचः" इत्यनेन वृद्धौ "षढोः कः सि" इत्यनेन षस्य कत्वे सस्य षत्वे च कृते अक्राक्षीत् इति सिध्यति, अमभावे सिचि वृद्धौ अकार्क्षीत् इति सिध्यति । च्लेः सिजभावपक्षे तु "शल इगुपधादनिटः क्सः" इत्यनेन क्सादेशे अकृक्षत् इति सिध्यति ।

ह्वेञ् धातो लुँङि प्रथमपुरुषैकवचने—अह्वत्, अह्वत, अह्वास्त इति रूपाणि । तत्र ह्वेञ्धातो लुँङि तिपि अनुबन्धलोपेऽडागमे "आदेच उपदेशेऽशिति" इत्यनेन आत्वे "च्लि लुङि" इत्यनेन च्लौ "लिपिसिचिह्वश्च" इत्यनेन च्लेरङि "आतो लोप इटि च" इत्यनेन आकारस्य लोपे अह्वत् इति सिध्यति । आत्मनेपदे तु "आत्मनेपदेष्वन्यतरस्याम्" इत्यनेन विकल्पेन च्लेरङि अह्वा अ त इति स्थिते "आतो लोप इटि च" इत्यनेनाकारस्य लोपे अह्वत इति सिध्यति । अङभावपक्षे तु अह्वास्त इति सिध्यति ।

## ८—प्रश्नोत्तराणि

उ०—अद्धातोर्लिटि प्रथमपुरुषैकवचने जघास इति रूपम् । तत्र अद्धातो र्लिटि तिपि तिपो णलि अनुबन्धलोपे "लिट्यन्यतरस्याम्" इत्यनेन घस्लादेशे घस् अ इति जाते "लिटिधातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे जश्त्वे च कृते "अत उपधायाः" इत्यनेन वृद्धौ जघास इति सिध्यति । घसादेशाभावपक्षे तु आद इति सिध्यति ।

चक्षिङ् धातोर्लिटि प्रथमपुरुषैकवचने—चख्यौ, चख्ये, चक्शौ, चक्शे, चचक्षे इति पञ्चरूपाणि भवन्ति—चक्ष्धातो र्लिटि ख्याञादेशे वा क्शिट इत्यनेन विकल्पेन ख्याञादेशो तत्र ख्याञो ञित्वात् "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यनेन आत्मनेपदे परस्मैपदे च—कृते—परस्मैपदविवक्षायां परस्मैपदे तिपि णलि च कृते ख्याञादेशो हि सूत्रकारमतेऽभिहितः भाष्यकारेण तु—क्शादिरयमादेश इति स्थापितः । तत्र असिद्धकाण्डे "शस्य यो वा" इति विकल्पेन यकारे—ख्या अ इति स्थिते "आत औ णलः", इत्य-

नेन णलः औकारादेशे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्यासस- ञ्ज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "ह्रस्वः" इत्यनेन ह्रस्वे "कुहोश्चुः" इत्यनेन चुत्वे "अभ्यासे चर्च" इत्यनेन चर्त्वे च कृते चख्यौ इति सिध्यति। आत्मनेपदे तकारस्य एशादेशे "आतो लोप इटि च" इत्यनेन आकारलोपे चख्ये इति सिध्यति । शकारस्य यत्वाभावपक्षे क्रमेण पदद्वये चक्शौ चक्शे इति रूपं सिध्यति । ख्याञादेशस्य च वैकल्पिकत्वात्—तदभावपक्षे—धातोर्ङित्वात् "अनुदात्तङित आत्मनेपदम्" इत्यनेन आत्मनेपदे तप्रत्यये तकारस्य "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशे द्वित्वेऽभ्याससञ्ज्ञायाम्—"हला- दिः शेषः" इत्यनेन लोपे च कृते चचक्षे इति रूपं सिध्यति ।

ऊर्णुञ्धातोर्लिटि प्रथमपुरुषैकवचने ऊर्णुनाव इति रुपम् । ऊर्णुनाव १८ पृष्ठे द्रष्टव्यम् ।

ब्रूञ्धातोर्लिटि प्रथमपुरुषैकवचने उवाच, ऊचे, इति च रूपद्वयम् ।

तत्र ब्रूञ्धातोर्लिटि तिपि तिपो णलि च कृते—अनुबन्धलोपे—"ब्रुवो वचिः" इत्यनेन वच्यादेशे वच् अ इति जाते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससञ्ज्ञायाम्—"लिटयभ्यासस्योभयेषाम्" इत्यनेनाभ्यास- वकारस्य सम्प्रसारणे–उकारे "सम्प्रसारणाच्च" इत्यनेन पूर्वरूपे "अत उप- धायाः" इत्यनेन वृद्धौ उवाच इति सिध्यति ।

आत्मनेपदे तु तकारस्य एशादेशे तस्य कित्वात् द्वित्वात्प्राक् "वचिस्वपि- यजादीनां किति" इत्यनेन सम्प्रसारणे—"सम्प्रसारणाच्च" इत्यनेन पर- रूपे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे कृतेऽभ्याससञ्ज्ञायाम्—"हला- दिःशेषः" इत्यनेन लोपे सवर्णपरत्वात् "अभ्यासस्यासवर्णे" इत्युवङभावे— सवर्णदीर्घे च कृते ऊचे इति रूपं सिध्यति ।

अधिपूर्वक इङ्धातोर्लिटि प्रथमपुरुषैकवचने अधिजगे इति रूपम् । तत्र अधिपूर्वात् इङ्धातोर्लिटि "गाङ्लिटि" इत्यनेन लावस्थायां एव—इङो गाङा- देशे अनुबन्धलोपे ततो लिटस्तादेशे तकारस्य "लिटस्तझयोरेशिरेच्" इत्यने- एशादेशे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्य- नेनाभ्याससञ्ज्ञायाम् "अभ्यासे चर्च" इत्यनेन जश्त्वे "आतो लोप इटि च" इत्यनेन आकारस्य लोपे च कृते अधिजगे इति सिध्यति ।

नन्वत्र स्थानिवत्त्वादेव ङित्वे सिद्धे ङित्करणं "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इत्यत्र "इणो गा लुङि" इत्यस्य ग्रहणाभावार्थमिति भाष्यम् ।

ननु कृते गाङादेशे द्वित्वे अभ्यासजश्त्वे आल्लोपे अधिजगे इति रूपं वक्ष्यति । तदयुक्तम् । "द्विर्वचनेऽचि" इत्यनेन गाङादेशनिषेधात् गाङादेशात्प्रागेव द्वित्वे सति उत्तरखण्डस्य गादेशे अधीगे इति रूपापत्तेरित्यतआह—लावस्थायां विवक्षिते एव गाङादेश इति—तत्र लावस्थायामिति वार्तिकमते गाङादेशात्प्रागेव "द्विर्वचनेऽचि" इति सूत्रं न प्रवर्त्तते द्वित्वनिमित्ताचोऽभावात् । विवक्षिते इति भाष्यमते तु—सुतरां "द्विर्वचनेऽचि" इति न प्रवर्त्तते अनैमित्तिकत्वादिति भावः ।

स्वप धातोर्लिटि प्रथमपुरुषैकवचने सुष्वाप इति रूपम् । तत्र "धात्वादेः षः सः" इत्यनेन धातुषकारस्य सकारे स्वप् धातोर्लिटि तिपि णलि च कृते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे कृते "लिट्यभ्यासस्योभयेषाम्" इत्यनेन अभ्यासस्य सम्प्रसारणे "सम्प्रसारणाच्च" इत्यनेन पूर्वरूपे "अत उपधायाः" इत्यनेन वृद्धौ "आदेशप्रत्यययोः" इत्यनेन षत्वे सुष्वाप इति । रूपं सिध्यति ।

दरिद्रा धातोर्लिटि प्रथमपुरुषैकवचने दरिद्राञ्चकार, ददरिद्रौ, इति रूपद्वयम् । तत्र दरिद्राधातोर्लिटि अनेकाच्त्वात्—"कास्यनेकाज्ग्रहणं कर्तव्यम्" इति वार्तिकानुसारेण "कासप्रत्ययादाममन्त्रे लिटि" इत्यनेन आमि आतो लोपे च "आमः" इत्यनेन लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन कृञनुप्रयोगकलिटि प्रयोगे द्वित्वे अभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे च कृते "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इति चुत्वे वृद्धौ दरिद्राञ्चकार इति रूपं सिध्यति । "आत औ णलः" इति सूत्रे औ, इत्येव सिद्धे औकार विधानं दरिद्रातेरालोपे कृते श्रवणार्थं तच्चामभावे एव अतो आमभावस्य ज्ञापनात् अतो णलि तस्यौकारे द्वित्वे अभ्यासकार्ये च ददरिद्रौ, इति ।

## ६—प्रश्नोत्तराणि

उ०—जहि—६० पृष्ठे द्रष्टव्यम् ।

ऐड्ढ्वम्—स्तुत्यर्थकात् ईड्धातोर्लङि ध्वमि—"लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अटि प्राप्ते "आडजादीनाम्" इत्यनेन आडागमे अनुबन्धलोपे

"आटश्च" इत्यनेन वृद्धौ षकारस्य ष्टुत्वेन ढकारे ऐड्ढ्वम् इति सिध्यति। ननु तर्हि ध्वेस्वरूपापेक्षया ध्वमित्यस्य एकदेशविकृतत्वात् इट् कथं नेति चेन्न। 'विकृतिग्रहणेन प्रकृतेरग्रहणात्' इट् न भवति। अयम्भावः—प्रकृतिग्रहणेन विकृतस्य ग्रहणं भवति। ननु विकृतिग्रहणेन प्रकृतेर्ग्रहणम्। पुरुषमानय इत्युक्ते हि अन्धोऽनन्धो वा पुरुष आनीयते। अन्धमानय इत्यत्र तु अन्ध एवानीयते नत्वनन्धः। तथा च—ध्वम् एत्वे कृते ध्वे शब्दः, तेन च विकृतेन ध्वमित्यस्य तत्प्रकृतिभूतस्य न ग्रहणमिति नेडिति भावः।

आत्थ—व्यक्तायां वाचि ब्रू इत्यस्माद्धातोर्लटि सिपि "ब्रुवः पञ्चानामादित आहो ब्रुवः" इत्यनेन आहादेशे थलि च कृतेऽनुबन्धलोपे "आहस्थः" इत्यनेन हकारस्य थकारे चर्त्वे च कृते आत्थ इति सिध्यति।

ननु—आत्थेत्यत्र आहादेशस्य स्थानिवद्भावेन ब्रूत्वात्ततः परस्य थस्य "ब्रुव ईट्" इति सूत्रेण ईडागमः कुतो नेति चेन्न। झलितिथत्वविधानात्। अयम्भावः—"आहस्थः" इति झलि परतः आहादेशस्य थत्वं विधीयते। ईटि तु सति झलादित्वाभावात्तन्निर्विषयं स्यात्। अतः आत्थेत्यत्र ईट् नेति विज्ञायत इति दिक्।

अन्वैयत—इति ६८ पृष्ठे द्रष्टव्यम्।

विदांकुरु—ज्ञानार्थकाद्विदधातोर्लिटि "विदांकुर्वन्त्वित्यन्यतरस्याम्" इत्यनेन लोटि आमि कृते 'लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते'। ततः लोटः सिपि "सेर्ह्यपिच्च" इत्यनेन सेर्हौ "तनादिकृञ्भ्य उः" इत्युप्रत्यये ऋकारस्य गुणे रपरे च कृते "सार्वधातुकमपित्" इत्यनेन हेरपित्वे ङित्वादुकारस्य गुणाभावे "उतश्च प्रत्ययादसंयोगपूर्वात्" इत्यनेन हेर्लुकि तस्याभीयत्वेनासिद्धत्वात्। "अत उत्सार्वधातुके" इत्यनेन। करोतेरकारस्योकारे विदांकुरु इति सिध्यति।

अजागरीत्—६८ पृष्ठे द्रष्टव्यम्।

---

१९३३

३ वष १ पत्रम्।

१—शूलेन पचति, जघनमिव, अल्पमन्नं यस्याम्, ऋतुः प्राप्तोऽस्य, सर्वस्मै हितम्, एषु विग्रहेषु कानि कानि रूपाणि सिद्ध्यन्ति के च प्रत्ययाः।

२—पौर्वपाञ्चालः, दाधिकम् , साहस्रम् , द्विषाष्टिकः, तावन्मात्रम् , अत्रत्याः समर्थविभक्तयो लेख्याः ।

३—ठप् , ष्लञ् , मप् , टिठन् , विडच् , ग्रुस् , घमुञ् , आमिनच् , एते प्रत्ययाः केष्वर्थेषु भवन्ति ।

४—"दिशोऽमद्राणाम्" इति मद्रपर्युदासाद्रादिवृद्धिः "वृद्धादेवेति नियमार्थं सूत्रम्" 'ऋतोर्वृद्धिमद्विधाववयवानामिति तदन्तविधिः पूर्वत्र' मासग्रहणं ज्ञापकं भवति, 'हरदत्तस्तु भस्याढ इति पुंवद्भावान्महानामिक इत्याह' एषु कयोश्चिद्द्वयोराशयमुपवर्णयत ।

५—"सद्यः परुत्परा" "प्रियस्थिर" "वाक्यादेराम" "द्वन्द्वरहस्य" "नञ् तत्पु०" एतान्यविकलानि सूत्राणि लिखत ।

६—वासतेयी, तत्र आयुष्मान् , भूयान् , लोहितकः, पटुपटुः, साधयतैतानि ।

७—ठक्ठञौ, अणञौ, छन्छलो को विशेषः ?

८—"गोत्रादङ्कवत्" "समूहवच्चबहुषु" "कर्मधारयवदुत्तरेषु" "क्रीतवत्परिमाणात्" एतेषामुदाहरणोपन्यासपूर्वकमाशयो वर्णनीयः ।

९—काण्डीरः, विशम् , हास्तिनम्, मासिकम् , सामधेनी एषां विग्रहवाक्यानि लेख्यानि ।

## १—प्रश्नोत्तराणि

उ०—शूलेन पचतीति विग्रहे "शूलात्पाके" इत्यनेन डाचि प्रत्यये कृते शूलात्करोति मांसमिति सिध्यति ।

जघनमिवेति विग्रहे—"शाखादिभ्यो यः" इत्यनेन य प्रत्यये कृते जघन्यः इति सिध्यति ।

अल्पमन्नं यस्यां सा इति विग्रहे "ब्राह्मणकोष्णिके संज्ञायाम्" इत्यनेन अन्नशब्दस्य उष्णादेशनिपातनात् उष्णिका यवागूः इति सिध्यति ।

"ऋतुः प्राप्तोस्य" इति विग्रहे—"ऋतोरण्" इत्यनेन अणि कृते आर्त्तवम् इति सिध्यति ।

सर्वस्मै हितम् इति विग्रहे 'सर्वाण्णो वेति वक्तव्यम्' इति वार्तिकबलात्

विकल्पेन । "सर्वपुरुषाभ्यां णढञौ" इत्यनेन णप्रत्यये कृते सार्वमिति तदभावे "तस्मै हितम्" इत्यनेन छप्रत्यये कृते सर्वायम् इति च सिध्यति ।

## २—प्रश्नोत्तराणि

उ०—पौर्वपाञ्चालः-"दिशोऽमद्राणाम्" इति सूत्रे दिशः किम्—पूर्वपञ्चालानामयमिति विग्रहे "तस्येदम्" इति सूत्रेण अणि कृते णित्वादादिवृद्धौ प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च कृते पौर्वपाञ्चालः इति सिध्यति । अत्र समर्थविभक्तिः षष्ठीति ज्ञेयम् ।

दाधिकम्—दध्ना संसृष्टमिति विग्रहे "संसृष्टे" इति सूत्रेण ठकि अनुबन्धलोपे ठस्येकादेशे कित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे दाधिकम् इति सिध्यति अत्र तृतीया समर्थविभक्तिः ।

साहस्रम्—सहस्रेण क्रीतमिति विग्रहे "संख्यायाः अतिशदन्तायाः कन्" इत्यनेन कनि प्राप्ते "शतमानविंशतिकसहस्रवसनादण्" इत्यनेन अणि अनुबन्धलोपे णित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे साहस्रम् इति सिध्यति । अत्र तृतीया समर्थविभक्तिः ।

द्विषाष्टिकः—द्वे षष्टी भृतो इति विग्रहे "तमधीष्टो भृतो भूतो भावी" इत्यनेन ठञि अनुबन्धलोपे ठस्येकादेशे ञित्वात् "संख्यायाः संवत्सरसंख्यस्य च" इत्यनेन उत्तरपदस्य वृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते द्विषाष्टिकः इति सिद्ध्यति । अत्र द्वितीयायाः समर्थविभक्तित्वमिति ज्ञेयम् ।

तावन्मात्रम्—तावदेवेति विग्रहे—"वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम्" इति वार्तिकेन स्वार्थे मात्रच् प्रत्यये प्रातिपदिकत्वात्सौ सोरमादेशे तावन्मात्रम् इति सिध्यति । अत्र प्रथमा समर्थविभक्तिरिति ज्ञेयम् ।

## ३—प्रश्नोत्तराणि

उ०—प्रावृषिकः—प्रावृषि जात इति विग्रहे "प्रावृषष्ठप्" इत्यनेन ठपि ठस्येकादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते प्रावृषिकः इति सिध्यति । ठपः पित्वन्तु "अनुदात्तौ सुप्पितौ" इति स्वरार्थम् अत्र प्रावृषि जात इत्यस्मिन्नर्थे ठप् प्रत्ययो भवति ।

**शामीलं भस्म**—शम्या विकार इत्यर्थे "शम्या ष्लञ्" इत्यनेन ष्लञि अनुबन्धलोपे ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे **शामीलं भस्म** इति सिध्यति षित्वं तु स्त्रियां ङीष्। शामीली स्रुगिति।

**कृत्रिमम्**—कृत्या निर्वृत्तमित्यर्थे–डुकृञ् करणे इति धातोः "ड्वितः क्त्रिः" इति क्त्रिप्रत्ययान्तात् "क्त्रेर्मम्नित्यम्" इत्यनेन मप् प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ **कृत्रिमम्** इति सिध्यति।

**कंसिकः**—इत्यत्र कंसेन कृतमित्यर्थे "कंसाट्टिठन्" इति सूत्रेण टिठन् प्रत्ययेऽनुबन्धलोपे ठस्येकादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते **कंसिकः** इति सिध्यति। अत्र सूत्रे टो ङीबर्थः। इकार उच्चारणार्थः।

**निबिडम्**—नेः नासिकाया नतेऽर्थे "नेर्बिडज्बिरीसचौ" इत्यनेन बिडचि प्रत्यये कृते **निबिडम्**। इति सिध्यति।

**अहंयुः**—अहमिति मान्तमव्ययमहङ्कारे तत्र अहमस्ति, अस्मिन्निति विग्रहे "अहंशुभमोर्युस्" इत्यनेन युस्प्रत्यये ऽनुबन्धलोपे सित्वं पदत्वार्थम्। तेन अनुस्वारे परसवर्णे च कृते प्रातिपदिकत्वात्सौ रुत्वविसर्गौ **अहंयुः** इति सिध्यति।

**एकधा**—एकः प्रकार इत्यर्थे "संख्याया विधार्थे धा" इत्यनेन धाप्रत्यये तस्य "एकाद्धो ध्यमुञन्यतरस्याम्" इत्यनेन धा इत्यस्य स्थाने विकल्पेन ध्यमुञि ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे **ऐकध्यम्** इति सिध्यति। तदभावे **एकधा** इति सिध्यति।

**स्वामी**—स्वमैश्वर्यं तद्वानित्यर्थे "स्वामिन्नैश्वर्ये" इत्यनेन आमिनच् प्रत्यये कृते **स्वामी** इति सिध्यति ऐश्वर्यइत्युक्ते धनवानित्यर्थे स्वामीति न भवति।

## ४–प्रश्नोत्तराणि

**उ०**—"दिशोऽमद्राणाम्" इति अत्र सूत्रे मद्रपर्युदासात् दिग्वाचकाजनपदवाचिनो आदेरेव वृद्धिः। तेन **पूर्वपाञ्चालकः** इति सिध्यति।

'ऋतोर्वृद्धिमद्विधाववयवानाम्' इति "अवयवादृतोः" इति सूत्रस्य ञिति णिति किति च तद्धिते परे 'अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यादिति' सूत्रार्थः। तेन पूर्ववार्षिक इत्यत्र ऋतुविशेषे वर्षाशब्दो नित्यस्त्रीलिंगो बहुवचनान्तः वर्षाणां पूर्वं पूर्ववर्षा, तत्र जात इत्यर्थे "पूर्वापराधरोत्तरमेक-

देशिनैकाधिकरणे" इत्यनेनैकदेशि समासे कृते ततो "वर्षाभ्यष्ठक्" इत्यनेन ठकि ठस्येकादेशे पूर्ववार्षिक इति सिध्यति । तत्र "अवयवाद्" इति किम्—पौर्ववार्षिक इत्यत्र पूर्वासु वर्षासु भव इति विग्रहे "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासे कृते ठकि आदिवृद्धिरेवेह भवति न तु उत्तरपदादिवृद्धिः। पूर्वपदस्य अवयववृत्तित्वाभावात् । ननु कथमिह—"वर्षाभ्यष्ठक्" इत्यनेन ठक् प्रत्ययविधौ तदन्तविधिप्रतिषेधादिति तत्राह—"ऋतोर्वृद्धिमद्विधावनवयवानाम्" इति । अयम्भावः अवयववाचकानां शब्दानामुपरि स्थितात् ऋतुवाचकात् वृद्धिनिमित्तकप्रत्ययविधाने कर्त्तव्ये तदन्तविधिर्वाच्य इत्यर्थकेन येनविधिरिति सूत्रभाष्यस्थितवचनेन पूर्वत्र पूर्वमुदाहृते उदाहरणे तदन्तविधिरित्यर्थः । तथा च पूर्ववार्षिकः इत्यत्र पूर्वहैमनः इत्यत्र चोदाहरणे "वर्षाभ्यष्ठक्" इति ठक् "सर्वत्राण् च तलोपश्च" इत्यणतलोपौ च सिध्यन्ति । इह तु प्रत्युदाहरणे तदन्तविधिर्नास्ति पूर्वासु वर्षास्विति सामानाधिकरण्येन पूर्वशब्दस्य अवयववृत्तित्वाभावादित्यर्थः । ततश्च प्रत्युदाहरणे पौर्ववर्षिकइत्यत्र "कालाठ्ठञ्" इति ठञेव नतु ठक् । स्वरे विशेषः । पौर्वहैमन्तिक इत्यत्रापि ठञेवेति भावः ।

## ५—प्रश्नोत्तराणि

उ०—"सद्यः परुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः" एते निपात्यन्ते ।

"प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः" ।

"वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु" ।
"द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु"
"न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः" इति ।

## ६—प्रश्नोत्तराणि

उ०—वासतेयी वसनं वसतिः तत्र साधुरित्यर्थे "पथ्यतिथिवसतिस्वपतेर्ढञ्" इत्यनेन ढञ्प्रत्यये अनुबन्धलोपे "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यनेन ढस्येयादेशे ञित्वादादिवृद्धौ "टिड्ढाणञ्द्वयसज्द-

द्वतन्प्रमात्रचतयपठक्ठञ्कञ्करपः" इति ङीपि प्रातिपदिकत्वात्सो सोर्लोपे "धा-सतेयी" इति सिध्यति ।

"इतराभ्योऽपि दृश्यन्ते" इति सूत्रेण "पञ्चमी सप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । ते च सूत्रे दृशि ग्रहणाद्भवदादि योग एव" । तेन स भवान् ततो भवान् । तत्र भवान् । इत्यादिकानि रूपाणि भवन्ति । आयुष्मान् इत्यस्य प्रयोगे न तेषां प्रयोगः ।

भूयान्—अयमनयोरतिशयेन बहुरिति विग्रहे वैपुल्यवाचकात् बहुशब्दाद् "बहोर्लोपो भू च बहोः" इत्यनेन ईयसुनि प्रकृते भूमादेः प्रत्ययादेरिकारस्य लोपश्च भूमावस्याभीयत्वेनासिद्धत्वादोर्गुणो न भवति ।

लौहितीकः—जपापुष्पादिसम्पर्कवशाल्लोहित इवेत्यर्थे "कर्कलोहितादी-कक्" इत्यनेन ईकक् प्रत्यये कित्त्वात् "किति च" इत्यनेनादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे लौहितीकः इति सिध्यति ।

पटुपटुः—इत्यत्र "वोतो गुणवचनात्" इत्यनेन ङीषभावे पुंसि च "कर्मधारयवदुत्तरेषु" इत्यधिकारात् "प्रकारे गुणवचनस्य" इत्यनेन सादृश्ये द्योत्ये गुणवचनस्य पटुशब्दस्य द्वित्वे कर्मधारयवद्भावे च कृते कर्मधारयवत्त्वात् "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पुंवत्त्वादिदं पटुपटुः सिध्यति ।

## ७—प्रश्नोत्तराणि

उ०—कथायां साधुरित्यर्थे "कथादिभ्यष्ठक्" इत्यनेन ठकि प्रत्यये कृते कित्त्वात् "किति च" इत्यनेनादिवृद्धिः सिध्यति । किञ्च—कित्त्वादन्तोदात्तोऽयम् । गुडे साधुर्गौडिकः इत्यत्र—"गुडादिभ्यष्ठञ्" इत्यनेन ठञि कृते ञित्त्वात् "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धिर्भवति । किञ्च—"ञ्नित्यादिर्नित्यम्" इत्यनेन ञित्त्वादाद्युदात्तोऽयम् । एष एवानयोर्विशेषः । तद्वत् अणञोः—स्वरे विशेषो वाच्यः । छन्छलोरप्येवमेव ।

## ८—प्रश्नोत्तराणि

उ०—"गोत्राद‌ङ्कवत्" अङ्के ये प्रत्ययास्ते तत आगत इत्यर्थेऽपि भवन्तीत्यर्थः । तत्र—विदेभ्यः आगतमित्यर्थे "सङ्घाङ्कलक्षणेष्वञ्यञिञामण्" इत्यनेन—अञन्तादिहाप्यर्थेऽणि विवक्षिते—"गोत्रेऽलुगचि" इत्यञो लुङ्निवृत्तौ वैदशब्दादण् तेन वैदम् इत्यादिकं सिद्ध्यति ।

"समूहवच्च बहुषु" "तत्प्रकृतिवचने मयट्" इत्येव—"तस्य समूहः" इत्यधिकारविहिताः सामूहिकाः प्रत्यया अतिदिश्यन्ते चान्मयडिति सूत्रार्थः। बहुषु प्राचुर्यविशिष्टेषु वर्तमानाच्छब्दात् स्वार्थे समूहवत् प्रत्ययाः स्युरिति तदर्थः। यद्वा—बहुत्वविशिष्टानि प्राचुर्यविशिष्टानि वस्तूनि यस्मिन्नधिकरणे उच्यन्ते, तदधिकरणे वाच्ये तद्वस्तुवृत्तेः शब्दात् समूहवत् प्रत्ययाः स्युरित्यर्थः। तत्राद्ये उदाहरति मोदकाः प्रकृताः मौदकिकमिति। "अचित्तहस्तिधेनोष्ठक्" इति सामूहिकष्ठक्। स्वार्थिकत्वेपि प्रकृतिलिङ्गातिक्रमः कुटीरवत्।

"कर्मधारयवदुत्तरेषु" इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यं स्यादिति तदर्थः। तत्प्रयोजनन्तु—सुब्लोपपुंवद्भावान्तोदात्तत्वानि। तेन पटुपट्वी—इत्यत्र पट्वीशब्दस्य "प्रकारे गुणवचनस्य" इत्यनेन द्वित्वे तस्य च—कर्मधारयवत्कार्ये—पूर्वभागस्य पुंवद्भावे। "समासस्य" इत्यन्तोदात्तत्वञ्चेति दिक्।

"क्रीतवत्परिमाणात्" "प्राग्वहतेष्ठक्" इत्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना (येन प्रकृत्यादिविशेषणेन) परिमाणाद्विहिता स्ते तथैव विकारेऽतिदिश्यन्ते। अणादीनामपवादोऽयं योगः। तत्र निष्केण क्रीतं नैष्किकमित्यत्र "असमासे निष्कादिभ्यः" इति क्रीते ठकि। एवं निष्कस्य विकारोऽपि नैष्किकः।

## ९—प्रश्नोत्तराणि

उ०—काण्डीरः—काण्डमस्त्यस्मिनिति विग्रहः।

विंशम्—विंशदधिका अस्मिन्निति विग्रहः।

हास्तिनम्—हस्तिनः प्रमाणमस्येति विग्रहः।

मासिकम्—मासे भवमिति विग्रहः।

सामिधेनी—समिदा धीयते यथा, ऋचा सा, इति विग्रहः।

---

१९३३

३ वर्षं २ पत्रम्।

१—भवेयुः, एधिढ्वम्, अचीकमत, अस्यन्त्स्यत, धिनु—तत्तद्विशेषकार्योपन्यासमुखेनैतेषां सिद्धिप्रकारो लेख्यः।

२—सार्वधातुके किं चिकीर्ष्यात्, प्रत्यये किम्—वव्रश्च, इमे फक्किके सशङ्कासमाधानं व्याख्येये।

३—औष्ट, प्रणिमयते, जुगुप्सते, ईजतुः, रूपाणीमानि—संसाध्य, तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वादित्यस्य सम्यगाशयो वर्णनीयः ।

४—जघ्नतुः, छिड्ढि, ऐड्ढ्वम्, उर्णुनाव, अध्ययौ, सधि, विशेषसूत्रनिर्देशपूर्वकमेते प्रयोगाः साधनीयाः ।

५—"गुणोवृद्धिर्गुणोवृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधोऽता यणपूर्वाः प्राप्तयो नव" ॥ इयं कारिका सव्याख्यानमुदाहरणे सङ्गमनीया ।

६—ऋतिः सौत्रो धातुरिकारान्तस्तकारान्तो वा ? ख्याधातोरसार्वत्रिकत्वे किं मानम् ? 'न विश्वसेदविश्वस्तम्' इत्यत्र शपोलुगभावो निष्ठाया इडभावश्च कथम् ?

एतेषां सप्रमाणमुत्तरं दातव्यम् ।

## १—प्रश्नोत्तराणि

उ०—भवेयुः । भूधातोर्विधिलिङि बहुत्वविवक्षायां झिप्रत्यये "तिङ् शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसञ्ज्ञायां "कर्त्तरि शप्" इत्यनेन शपि अनुबन्धलोपे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽवादेशे च "यासुट् परस्मैपदेषूदात्तोङिच्च" इत्यनेन यासुडागमेऽनुबन्धलोपे "झेर्जुस्" इत्यनेन झेर्जुसि—जकारस्येत्सञ्ज्ञायां लोपे च कृते "उस्यपदान्तात्" इत्यनेन पररूपे प्राप्ते परत्वादन्तरङ्गत्वाच्च "अतो येयः" इति प्राञ्चः । तेन इयादेशे गुणे च कृते रुत्वे विसर्गे च भवेयुः इति साधु ।

ऐधिढ्वम्—एधधातो र्लुङि आत्मनेपदे ध्वमि "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिजागमे इत्संज्ञायां ... "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमेऽनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अटि प्राप्ते "आडजादीनाम्" इत्यनेन आडागमे "आटश्च" इत्यनेन वृद्धौ "धि च" इत्यनेन सलोपे "इणः षीध्वं लुङ्लिटां धोऽङ्गात्" इत्यनेन धकारस्य ढकारे ऐधिढ्वम् इति सिध्यति । उत्तरसूत्रे "विभाषेटः" इत्यत्र इड्ग्रहणात् पूर्वसूत्रे "इणः षीध्वंलुङ्लिटां धोऽङ्गात्" इत्यत्र इड्भिन्न एव इण्गृह्यते इति केचिदाहुः । तन्मते तु प्रकृते इटः परत्वात् धकारस्य ढत्वाभावे ऐधिध्वम् इति

सध्यति । इदं तु मतान्तरं भाष्यानारूढमिति सूचयितुं तु शब्दः । मतभेदमाश्रित्याह 'ढधयोर्वस्य मस्य च द्वित्वविकल्पात् षोडश रूपाणि' । तत्र ढत्वाभावपक्षे धकारस्य "अनचि च" इति द्वित्वविकल्पात् द्विधमेकधमिति रूपद्वयम् । एवं ढत्वे द्विढं एकढमिति रूप यम् । रूपचतुष्टयेऽपि—"यणो मयो द्वे वाच्ये" इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च प्रागुक्तानि चत्वारिरूपाणि भवन्ति । तथा चाष्टौ रूपाणि सम्पन्नानि । मकारस्य द्वित्वविकल्पादेतान्यष्टौ रूपाणि । एकमकाराणि द्विमकाराणि चेति षोडशरूपाणि सम्पन्नानीत्यर्थः ।

अचीकमत—२७ पृष्ठे द्रष्टव्यम् ।

अस्यन्स्यत—ऊकारेत्संज्ञक स्यन्द धातोर्लृङ्लकारे "वृद्भ्यः स्यसनोः" इति परस्मैपदाभावे आत्मनेपदे तप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "स्यतासी लृलुटोः" इत्यनेन स्यप्रत्यये ऊदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन विकल्पेनेडागमे षत्वे च कृते अस्यन्दिष्यत इति रूपम् । इडभावपक्षे तु दस्य चर्त्वे अस्यन्स्यत इति सिध्यति ।

धिनु—धिवि धातोरिदित्वान्नुमि कोटि सिपि सिप्स्थाने "सेर्ह्यपिच्च" इत्यनेन सेर्ह्यादेशे "धिन्विकृण्व्योर च" इत्युप्रत्यये वकारस्य अकारादेशे च कृते "उतश्च प्रत्ययादसंयोगपूर्वात्" इत्यनेन हेर्लुकि धिनु इति सिध्यति ।

## २—प्रश्नोत्तराणि

उ०—"सार्वधातुके किम्" चिकिर्ष्यात् ७० पृष्ठे द्रष्टव्यम् ।

प्रत्यये किम् वव्रश्च—"उरत्" 'अभ्यासऋवर्णस्यात्स्यात्प्रत्यये परे' इति सूत्रार्थः । तत्र शङ्कते अङ्गेनैव प्रत्ययस्याक्षिप्तत्वादेव सिद्धे प्रत्यये परत इति किमर्थमिति प्रश्नः । समाधत्ते वव्रश्चेति । ओव्रश्चू च्छेदने, लिटि णलि द्वित्वे–"लिट्यभ्यासस्योभयेषाम्" इत्यनेन अभ्यासरेफस्य सम्प्रसारणेन ऋकारे "उरत्" इति रपरत्वे । "हलादिः शेष" इति लोपे वव्रश्चे इति रूपम् । अत्राभ्यासऋवर्णस्य रेफस्थानिकस्य सम्प्रसारणस्य यः उरदत्नसम्पन्नः आकारः तस्य "अचः परस्मिन्पूर्वविधौ" इति स्थानिवत्वेन सम्प्रसारणतया तस्मिन् परे वकारस्य "न सम्प्रसारणे सम्प्रसारणम्" इति निषेधान्न सम्प्रसारणमिति स्थितिः ।

उरदित्यत्रप्रत्यये परत इत्यनुक्तौ तु सम्प्रसारणभूतऋकारस्थानिकस्य अकारस्य परनिमित्तकत्वाभावेन स्थानिवत्त्वाप्रसक्तेः सम्प्रसारणत्वाभावात्तस्मिन् परतो "न सम्प्रसारणे सम्प्रसारणम्" इति निषेधो न स्यादतस्तद्ग्रहणमावश्यकमिति भावः ।

## ३—प्रश्नोत्तराणि

औष्ट:—शब्दार्थक उङ्धातोर्लुङि आत्मनेपदे त प्रत्यये "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिचि इचावितौ लुङ्लङ्लृङ्क्ष्वडुदात्तः इत्यट् प्राप्ते "आडजादीनाम्" इत्यनेन आडागमे "आटश्च" इत्यनेन वृद्धौ सस्य षत्वे ष्टुत्वे च औष्ट इति सिध्यति ।

प्रणिमयते—प्रनि उपसर्गात्—मेङ्धातोरात्मने लट्लकारे तप्रत्यये सार्वधातुकसंज्ञायाम् "कर्तरि शप्" इत्यनेन शपि शपावितौ—अयादेशे "टित आत्मनेपदानांटेरे" इत्यनेन एत्वे—नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च" इति णत्वे प्रणिमयते इति सिध्यति ।

ननु प्रणिमयते इत्यत्र णत्वमिदं न सम्भवति, शिद्विषये आत्वाभावेन, मारूपाभावात् । तथा प्रणिमानशब्देऽपि णत्वं न सम्भवति । तत्र मेङः कृतात्वस्य लाक्षणिकमारूपत्वात् । "ग्रामादाग्रहणेष्वविशेषः" इत्याश्रित्य मेङोऽपि कृतात्वस्य णत्वविधौ ग्रहणे तु "मीनातिमिनोतिदीङां ल्यपि च" इत्यनेनात्वे प्रनिमाता प्रनिमास्यति इत्यत्रापि नेर्णत्वापत्तिरित्यत आह—तत्र घुप्रकृति माङिति पठित्वा ङितोमाप्रकृतेरपि ग्रहणस्येष्टत्वात् । तत्र "नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोति देग्धिषु" इति णत्वविधौ अयम्भावः—घुमेत्यस्यस्थाने घुप्रकृतिमाङितिपठित्वा तत्र प्रकृतिशब्दस्य घुमाङ् प्रकृतिपरत्वमाश्रित्य घौ माङ्धातौ घुमाङ्प्रकृतौ च परतः इति पर्यवसानमाश्रित्य माप्रकृतेर्ङितो मेङ्धातोः कृतात्वस्यापि ग्रहणस्य भाष्यकृता अभ्युपगतत्वादित्यर्थः । एवञ्च प्रणिमयते इत्यत्र नाव्याप्तिः । मेङः कृतात्वमाप्रकृतित्वे सति ङित्वात् । नापि मीनातिमीनोत्योरात्वे प्रनिमाता प्रनिमास्यति इत्यत्र अतिव्याप्तिः । मारूपस्य ङित्वाभावादिति भावः । एतच्च सर्वं घुसंज्ञासूत्रे भाष्ये स्थितम् ।

जुगुप्सते—गुप् धातो "गुप्तिज्किद्भ्यः सन्" इति सनि "सन्यङोः"

इति द्वित्वे अभ्याससंज्ञायाम "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः"इत्यनेन अभ्यासाकारस्य चुत्वे सनोऽनार्धधातुत्वाकत्वादिड्गुणयोरभावे "सनाद्यन्ता-धातवः" इत्यनेन धातुसंज्ञायां धातोरात्मनेपदे लट्लकारे त. प्रत्यये "टित आ-त्मनेपदानां टेरे" इत्येत्वे शपि पररूपे च कृते जुगुप्सते इति सिध्यति।

ईजतुः—४२ पृष्ठे द्रष्टव्यम्।

## ४—प्रश्नोत्तराणि

जघ्नतुः—८ पृष्ठे द्रष्टव्यम्

द्विड्ढि—द्विष धातो लोंटि आत्मनेपदे सिपि सेर्ह्यादेशे ततो हेर्धिः षस्य जश्त्वेन डकारे ष्टुत्वेन ढत्वे सति द्विड्ढि इति सिध्यति।

ऐड्ढवम—५८ पृष्ठे द्रष्टव्यम्।

ऊर्णुनाव—१८ पृष्ठे द्रष्टव्यम्।

अध्ययै—अध्ययनार्थकात् अधि—उपसर्गात्—इङ्धातोर्लोटि आत्मनेपदे इटि "सुट्कात्पूर्वः" इति सूत्रभाष्यसिद्धान्तात्—"पूर्वं धातु साधनेन युज्यते पश्चा-दुपसर्गेण" इति वचनात् इट एत्वे आटि वृद्धौ अधि इ ऐ इति स्थिते गुणेऽयादेशे यणि च कृते अध्ययै इति सिध्यति।

ननु "पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन इत्यपि पक्षः "सुटकात्पूर्वः" इति सूत्रभाष्ये स्थितः। तथा च—अधि इ ऐ इति स्थिते पूर्वसवर्णदीर्घे सति गुणा-यादेशयोः कृतयोः अवयै इति स्यादित्याशङ्क्य निराकरोति-पूर्वं धातुरिति। साधने नेत्यस्य कारकबोधकेनेत्यर्थः। प्रत्ययेनेति यावत्। दर्शन-इत्येतस्य मते इत्यर्थः। "पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन" इति पक्षे पूर्वप्रकृतिकत्वेन अन्तरङ्गत्वाद "सार्वधातुकार्धधातुकयोः" इति गुणं बाधित्वा सवर्णदीर्घः प्राप्तो न भवती-त्यन्वयः। कुत इत्यत आह-"णेरध्ययने वृत्तम्" इति निर्देशादिति। अन्यथा ल्युटि अनादेशे अधि इ अन इति स्थिते पूर्वसवर्णदीर्घे ततो गुणायादेशयोः कृतयोः अध्ययनमिति प्रसङ्गादिति भावः। वस्तुतस्तु—पूर्वं धातुः साधनेन युज्यते इत्येव भाष्यसम्मतम् पूर्वं धातुरुपसर्गेण, नैतत्सारमिति भाष्योक्तेरित्यन्यत्र विस्तरः।

सधि—१९ पृष्ठे द्रष्टव्यम्।

## ८—प्रश्नोत्तराणि

उ०—अजागरीत्–निद्राक्षयार्थकात् जागृधातोर्लुङि तिपि अनुबन्धलोपे अडागमे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिचि इचावितौ "आर्धधातुकस्येड्वलादेः" इत्यनेन इटि "अस्तिसिचोऽपृक्ते" इत्यनेन च ईटि कृते जागृ इ सत्, इत्यत्र यण्प्राप्तः, तं सार्वधातुकगुणो बाधते तं सिचिवृद्धिः, तां प्रबाध्य "जाग्रोऽविचिण्णल्ङित्सु" इति गुणे रपरत्वे च कृते अजागर् ईदिति स्थिते तत्र हलन्तलक्षणा वृद्धिः प्राप्ता सा "नेटि" इत्यनेन निषिद्धा ततो "अतो-हलादेर्लघोः" इति वृद्धिं बाधित्वा "अतो ल्रान्तस्य" इति वृद्धिः प्राप्ता "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इति निषिध्यते ।

तादहुः वृद्धाः—

"गुणोवृद्धिर्गुणोवृद्धिः प्रतिषेधो विकल्पनम् ।"
"पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव ॥ इति ।"

## ९—प्रश्नोत्तराणि

उ०—ऋतिः सौत्र इति—"ऋतेरीयङ्" ऋतिः सौत्रस्तस्मादीयङ्स्यात् स्वार्थे । ननु ऋतेर्धातुपाठे अदर्शनात्—कथं तस्मादीयङिति शङ्क्यमानं प्रत्याह—ऋतिः सौत्र इति । सूत्रे भवः-सौत्र इति–सूत्रार्थकोऽयं धातुरिति । तस्मादर्थविशेषस्यानिर्देशात् स्वार्थे ईयङ् विधीयते । तकारान्तोधातुरयमिकानिर्दिष्टोनत्विकारान्तः। इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धे ईयङिति ईकारोच्चारणवैयर्थ्यात् । न च इदन्तत्वे सति "एरनेकाचोऽसंयोगपूर्वस्य" इति यण् स्यादिति वाच्यम् । "एवमपि ऋतेर्ङ्यः इति ङ्यप्रत्यये कृते 'अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घेणैव सिद्धे ईयङ्विधिवैयर्थ्यात् । इति ।

"ख्याधातुः" सार्वधातुकमात्रविषय इति–अत्र प्रमाणमाह—"सस्थानत्वं नमः ख्यात्रे" इति वार्तिकम् । नमः ख्यात्रे इत्यत्र सस्थानत्वं वक्तव्यम् । अन्यथा "शर्परे विसर्जनीयः" इत्यनेन विसर्गः स्यादिति तदभिप्रायः । आर्द्धधातुके-ऽप्यस्य प्रयोगे कृदन्तेऽस्मिन्परे "शर्परे विसर्जनीयः" इत्यस्याऽप्रवृत्त्या कुप्वोरिति जिह्वामूलीयो दुर्वार एव स्यात् । कुप्वोरित्यस्य "विसर्जनीयस्य सः" इत्यस्यापवादत्वमजानतो वार्तिककृत उक्तिरिति न वाच्यम् । ख्याञादेशस्य ख्या-

दित्वप्रयोजनगणनावसरे एव तदुक्तेरिति संख्यातीति प्रयोगस्तु नास्त्येव संख्येति प्रयोगस्तु—न्यासकृन्मते ख्याञादेशस्येति बोध्यमिति ।

"नविश्वसेदविश्वस्तमिति" "तनादिकृञ्भ्य उः" इति सूत्रे तनादित्वादेवसिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम् । तेन गणकार्यस्यानित्यतया "विश्वसेत्" इत्यत्र अदादिगणकार्यं शपो लुङ् न भवतीत्यर्थः । "वस्तुतस्तु—कृञ्ग्रहणस्यात्र भाष्ये प्रत्याख्यातत्वात् उक्तज्ञापनाभावात् विश्वसेदित्यसम्बद्धमेवेत्याहुः । विश्वस्तमित्यत्र तु—आगमशास्त्रस्यानित्यत्वात् नेडित्याहुः ।

---

१९३४

३ वर्षे १ पत्रम् ।

१—शैवपुरम्, मदीयः, दाक्षाः, आस्तेयम्, आश्मरथ्यः, साक्तुकः, शङ्कव्यम्, पैक्षुभारिकः ।
एतेषां विग्रहवाक्यानि प्रदर्श्य सिद्धिप्रकारं दर्शयत ।

२—चार्तनः, प्रावृषिकः, शातभिषः, समीथम्, पीलुमूलतः, पुरोडाशीयाः, वारिपथिकम्, आकालिकः, एतानि रूपाणि प्रत्ययतदर्थनिर्देशेन साधयत ।

३—कार्पासम्, मुद्गाः, पाक्मिम्, मैनिकः, कार्मः, सिद्धिमेषां प्रदर्श्य तत्रत्यान् विशेषान् लिखत ।

४—विशालम्, अनुकः, गाण्डीवम्, कुतः, पटीयांसः, एकतमः, शम्बाकरोति, यथायथम्, एषामर्थान् प्रदर्श्य सिद्धिं कुरुत ।

५—औमीनम्, चतुर्थः, किवान्, भवः, दक्षिणात्, मयका, द्विशतिकाम्, परस्परम् विशेषसूत्राणि सम विभक्तीश्च प्रदर्श्य साधयतैतानि रूपाणि ।

६—"असमासे निष्कादिभ्यः" इति सूत्रं षड्विधसूत्रमध्ये कीदृशमिति सोपपत्तिकमुपवर्ण्य, सिकताशब्दस्य मत्वर्थे रूपाणि दर्शयत ।

७—"नञ्पूर्वात्" "इन्द्रियमिन्द्रलिङ्ग" "मतजनहलात्" "तमधीष्टो" सूत्राण्येतान्यविकलानि विलिख्य सोदाहरणानि व्याख्येयानि ।

सूचना—पश्नानामुत्तरेणैव पूर्णाङ्कान् प्राप्नुयात्सुधीः ।
अन्त्यद्वयस्य हेयत्वं न कदाचिदभीप्सितम् ॥

## १—प्रश्नोत्तराणि

उ०—शैवपुरम्—उदग्देशे शिवपुरं नामग्रामविशेषः । तत्र भवमिति विग्रहे "उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्" इति सूत्रेण अञि अनुबन्धलोपे ञित्वादादिवृद्धौ प्रातिपदिकत्वात् "सुपोधातुप्रातिपदिकयोः" इति सुपो-लुकि "एकदशविकृतन्यायेन" पुनः । सौ सोरमादेशे शैवपुरम् इति सिद्धयति ।

मदीयः—ममेदमिति विग्रहे "युष्मदस्मदोरन्यतरस्यां खञ् च" इत्यनेन छप्रत्यये "प्रत्ययोत्तरपदयोश्च" इत्यनेन मपर्यन्तस्य मादेशे छस्येयादेशे प्रातिपदिकत्वाद् विभक्तेर्लुकि पुनः सौ रुत्वे विसर्गे च कृते मदीयः इति सिद्धयति ।

दाक्षाः—दक्षस्य गोत्रापत्यं "अत इञ्" इति इञि । दाक्षेः छात्रा इति विग्रहे "इञश्च" इत्यनेन अण्प्रत्यये अनुबन्धलोपे णित्वादादिवृद्धौ भसंज्ञायाम् "यस्येति च" इतीकारलोपे प्रातिपदिकत्वाद् विभक्तेर्लुकि ततः जसि जकारस्ये-त्संज्ञायाम् "प्रथमयोःपूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घे सकारस्य रुत्वे विसर्गे च कृते दाक्षाः इति सिद्धयति ।

आस्तेयम्—अस्ति इत्यस्मात् सप्तम्यन्तात् भवार्थे "दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्" इत्यनेन ढञि प्रत्ययेऽनुबन्धलोपे ढस्य एयादेशे भसंज्ञायाम् "यस्येति च" इत्यनेन इकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे आस्तेयम् इति सिद्ध्यति ।

आश्मरथः—"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" इति सूत्रे पुराणेतिसत्वे आश्मरथ्येन प्रोक्त इति विग्रहे यञन्तात् आश्मरथ्यशब्दादणि भसंज्ञायाम् "आपत्यस्य च तद्धितेऽनाति" इत्यनेन यलोपे सति तत्सिध्यति पुराणग्रहणाभावे तु "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" इत्यनेन णिनिः स्यात्तन्माभूदतस्तद्ग्रहणमिति ।

साक्तुकः—सक्तुषु साधु इति विग्रहे "गुडादिभ्यष्ठञ्" इत्यनेन ठञि प्रत्ययेऽनुबन्ध लोपे "इसुसुक्तान्तात्कः" इत्यनेन कादेशे ञित्वादादिवृद्धौ प्रातिपदिकत्वाद् विभक्तेर्लुकि पुनः सौ रुत्वे विसर्गे च साक्तुकः इति सिद्धयति ।

शङ्कव्यम्—शङ्कवे हितमिति विग्रहे "तस्मै हितम्" इत्यनेन "उगवा-

विभ्यो यत्" इतिसूत्रबलात् यत्प्रत्यये अनुबन्धलोपे "ओर्गुणः" इति गुणेऽवादेशे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे च कृते शङ्कव्यम् इति सिद्धयति ।

पैक्षुभारिकः—इक्षुभारं हरति वहत्यावहति वेति विग्रहे "तद्धरति वहत्यावहति भाराद्वंशादिभ्यः" इत्यनेन ठञ्प्रत्ययेऽनुबन्धलोपे ठस्येकादेशे ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च पैक्षुभारिकः इति सिद्धयति ।

## २—प्रश्नोत्तराणि

इ० वार्त्तनः—"अवृद्धादपि बहुवचनविषयात्" इति सूत्रे विषयग्रहणाभावे वर्तनी च वर्तनी च वर्तनी च वर्त्तन्यः । तासु भवो वार्तन इत्यत्रएकशेषेण बहुत्वे माभूदतस्तद्ग्रहणमिति ।

प्रावृषिकः—प्रावृषि जात इति विग्रहे "प्रावृषष्ठप्" इत्यनेन ठपि अनुबन्धलोपे ठस्येकादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते प्रावृषिकः इति सिद्धयति ।

शातभिषः—शातभिषजि जात इति विग्रहे जातार्थे "तत्र जातः" इत्यनेन अणि कृते ञित्वपक्षे टिलोपे च कृते अण्प्रत्ययस्य च "वत्सशालाभिजिदश्वयुक्छतभिषजो वा" इत्यनेनाणो लोपाभावे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते शातभिषः इति सिद्धयति ।

समीयम्—समादागतमिति विग्रहे "हेतुमनुष्येभ्योऽन्यतरस्याम् रूप्यः" इत्यनेन अणोऽभावे गहादित्वात् छप्रत्यये छस्येयादेशे प्रातिपदिकत्वात्सौ सोरमादेशे समीयम् इति सिध्यति ।

पीलुमूलतः—पीलुमूलेन एकदिक् इत्यर्थे "तसिश्च" इत्यनेन तसि प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ स्वरादिपाठादस्य च अव्ययत्वे सोरुत्वे विसर्गे च पीलुमूलतः इति सिद्धयति ।

पुरोडाशीयाः—पुरोडाशे भव इति विग्रहे "विभाषा हविरपूपादिभ्यः" इत्यनेन विकल्पेन यत्प्रत्यये पक्षे छप्रत्यये च कृते तस्येयादेशे प्रातिपदिकत्वाज्जसि जकारस्येत्संज्ञायां लोपे च कृते पूर्वसवर्णदीर्घे रुत्वे विसर्गे च "पुरोडाशीयाः" इति साधु ।

वारिपथिकम्—वारिपथेन आहृतमिति विग्रहे वारिपथशब्दात् "उत्तरपथेनाहृतं च" इति सूत्रबलात् "आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसं-

  

ख्यानम्" इति वार्तिकेन ठञि अनुबन्धलोपे ठस्येकादेशे प्रातिपदिकत्वात्सौ सोरमादेशे वारिपथिकम् इति सिद्ध्यति।

आकालिकः—समानकालावाद्यन्तौ यस्येति विग्रहे "आकालिकडाद्यन्तवचने" इत्यनेन इक् प्रत्यये परे समानकालशब्दस्य आकाल इत्यादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे आकालिकः इति सिद्ध्यति।

## ३—प्रश्नोत्तराणि

उ०—कार्पासम्—"मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" इति सूत्रे अभक्ष्येत्यादिग्रहणाभावे कार्पासम् आच्छादनमित्यत्रापि मयड्प्रत्ययस्यादिति तन्माभूदतस्तद्ग्रहणम्।

मुद्गाः—मुद्गानां विकारा इति विग्रहे "बिल्वादिभ्योऽण्" इत्यनेन अणितस्य च "फलपाकशुषामुपसंख्यानम्" इत्यनेन लुकि प्रातिपदिकत्वाज्जसि जकारस्येत्संज्ञायां पूर्वसवर्णदीर्घे—रुत्वे विसर्गे च कृते मुद्गाः इति सिध्यति।

पाकिमम्—पाकेन निर्वृत्तमिति विग्रहे भावप्रत्ययान्तात् पाकशब्दात्—"भावप्रत्ययान्तादिमब्वक्तव्यः" इति वार्तिकेन इम प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे पाकिमम् इति सिद्ध्यति।

मैनिकः—मीनं हन्ति इति विग्रहे "पक्षिमत्स्यमृगान्हन्ति" इति सूत्रबलात् "स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम्" इति वार्तिकेन "मत्स्यपर्यायेषु मीनस्यैव' इति नियमेन मीनशब्दात् ठक्प्रत्ययेऽनुबन्धलोपे ठस्येकादेशे कित्त्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते मैनिकः इति सिद्ध्यति।

कार्मः—कर्मशीलः कार्म इत्यत्र "कार्मस्ताच्छील्ये" इति सूत्रेण कार्म इति ताच्छील्ये णे टिलोपो मे निपात्यते णित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वविसर्गे च कृते कार्मः इति सिद्ध्यति। अत्र "नस्तद्धिते" इत्येव सिद्धे निपातनमिदं "अण्कार्यं ताच्छीलिके णेऽपि भवतु इति ज्ञापनार्थम्" तेन चौरी तापसी इत्यादि सिद्धम्।

## ४—प्रश्नोत्तराणि

उ०—विशालम्—"वेः शालच्छङ्कटचौ" इत्यनेन क्रियाविशिष्टकारकवाचकात्स्वार्थे वेः उपसर्गात्पस्य शालच् प्रत्यये कृतेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे विशालम् इति सिध्यति।

अनुकः—अनुकामयते इति विग्रहे—अनु इत्यस्मात् "अनुकाभिकाभीकः कमिता" इति सूत्रेण कन्प्रत्यये प्रातिपदिकत्वात्सौ रुत्वविसर्गे च कृते अनुकः इति सिद्ध्यति ।

गाण्डीवम्—गाण्डिशब्दात् गाण्डीशब्दाच्च मत्वर्थे "गाण्ड्यजगात्संज्ञायाम्" इति सूत्रेण वप्रत्यये प्रातिपदिकत्वात्सौ सोरमादेशे गाण्डीवम् । इति सिद्ध्यति । गाण्डीवमर्जुनस्य धनुः गाण्डिवम् । अत्र सूत्रे गाण्डिशब्दस्य गाण्डीशब्दस्य च कृतयणोः गाण्ड्य इति युगपन्निर्देशः । "ख्यत्यात्परस्य" इत्यत्र खितिशब्दयोः खीतीशब्दयोश्च यथेत्यर्थः । रूढशब्दत्वादिह न मतुप्समुच्चय इति ।

कुतः—कस्मादिति विग्रहे "पञ्चम्यास्तसिल्" इति सूत्रेण विकल्पेन तसिल् प्रत्ययेऽनुबन्धलोपे "कु तिहोः" इति सूत्रेण तादौ हादौ च विभक्तौ परतः किमः कु इत्यादेशे प्रातिपदिकत्वात्सौ "तसिलादयः प्राक् पाशपः" इत्युक्तेरस्याव्ययत्वात् "अव्ययादाप्सुपः" इत्यनेन सुपो लुकि सकारस्य रुत्वे विसर्गे च कृते कुतः इति सिध्यति ।

पटीयांसः—उदीच्याः प्राच्येभ्यः पटुतराः—इति विग्रहे पटुशब्दात् "द्विवचनविभज्योपपदे तरबीयसुनौ" इति सूत्रेण ईयसुनि अनुबन्धलोपे उगित्वान्नुमि दीर्घे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते पटीयांसः । इति सिद्ध्यति ।

एकतमः—अयमेषामेकतम इति विग्रहे—"एकाच्च प्राचाम्" इति सूत्रेण डतमचि अनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते एकतमः इति सिद्ध्यति ।

शम्बाकरोति—शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति इत्यर्थे "कृञो द्वितीयतृतीयशम्बबीजात्कृषौ" इति सूत्रेण द्वितीयादिभ्यो कृञ् एव योगे डाचि प्रत्ययेऽनुबन्धलोपे बहुलोऽव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । तेन शम्बाकरोति । इति सिद्ध्यति ।

यथायथम्—योऽयमात्मा यच्चात्मीयं तद्यथास्वम् । तस्मिन् यथा शब्दस्य "यथास्वे यथायथम्" इत्यनेन द्वे क्लीबत्वं च निपात्यते । यथायथं ज्ञाताः यथास्वभावमित्यर्थः । यथात्मीयमिति वा ।

# ८—प्रश्नोत्तराणि

उ०—औमीनम्—उमानां भवनं क्षेत्रमित्यर्थे "विभाषा तिलमाषोमाभङ्गाणुभ्यः" इति सूत्रेण विकल्पेन यत्प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे "उम्यम्" इति सिद्ध्यति । पक्षे "धान्यानां भवने क्षेत्रे खञ्" इत्यनेन खञि अनुबन्धलोपे खस्येनादेशे प्रातिपदिकत्वात्सौ सोरमादेशे "औमीनम्" इति च सिद्ध्यति ।

ननूमाभङ्गयोर्धान्यत्वाभावात्कथमिह खञ् । "व्रीहयश्च मे यवाश्च मे" इति चमकानुवाके हि द्वादशैव धान्यानि पठितानि, नतूमाभङ्गौ पठिताविति चेन्मैवम् । 'क्षणसप्तदशानि धान्यानि' इति स्मरणात् । तत्र चोमाभङ्गयोरपि पाठात् धान्यत्वमस्तीति भाष्यादौ स्थितत्वात् । नच चमकानुवाके धान्यपरिगणनेनार्थः, तत्राधान्यानामप्यश्मादीनां पाठात् । धान्यानामपि केषाञ्चित् कोद्रवादीनामपाठात्, तस्मादन्यत एव धान्यनिर्णय इति पूर्वोक्तस्मृत्या, तयोर्धान्यत्वमस्तीति शम् ।

चतुर्थः—चतुर्णां पूरण इति विग्रहे "तस्य पूरणे डट्" इत्यनेन डटि अनुबन्धलोपे "षट्कतिकतिपयचतुरां थुक्" इत्यनेन थुगागमे उकावितौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च विहिते "चतुर्थः" इति सिद्ध्यति ।

किवान्—किम् संख्या परिमाणमस्मिनस्तीति विग्रहे "तदस्यास्त्यस्मिन्निति मतुप्" इत्यनेन मतुपि अनुबन्धलोपे "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इत्यनेन मकारस्य वकारे प्रातिपदिकत्वात्सौ उगित्वान्नुमि उमावितौ दीर्घे सुलोपे तकारस्य संयोगान्तलोपे च विहिते मस्यानुस्वारे "किवान्" इति सिद्ध्यति ।

अवः—अवरस्मात् अवरस्या वा दिगित्यर्थे "पूर्वाधरावराणामसिपुरधवश्चैषाम्" इत्यनेन असिप्रत्यये अवादेशे च विहिते अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोर्लोप सस्य रुत्वे विसर्गे च कृते अवः इति सिद्ध्यति ।

दक्षिणात्—इत्यत्र "उत्तराधरदक्षिणादातिः" इत्यनेन आतिप्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ सोर्लोपे दक्षिणात् इति सिद्ध्यति ।

मयका—ओकारेत्यादि किमिति–अयम्भावः–अकज्विधौ सुपोऽप्यनुवृत्त्या सर्वनाम्ना सुपा च टेर्विशेषणे कामचारात् अव्यवस्था प्रसङ्गे भाष्यकारवचनाद् व्य-

वस्थाश्रीयते । ओकारसकार इत्यादि संकोचश्च युष्मदस्मन्मा विषयकः, तथैव भाष्ये उदाहृतत्वात् । अन्येषां तु अविशेषेण प्रातिपदिकस्यैव टेः प्रागकच् , न सुबन्तस्य तेन सर्वकेण, इमकेन, भवकन्तमित्यादि सिद्धयति प्रकृते 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्" इति वार्तिके 'ओकारेत्यादि' नियमानङ्गीकारे सुपः प्रागकचि कृते त्वामादेशौ, यत्वं च न स्यात्, तदर्थं 'ओकारेत्यादि' नियमोऽङ्गीकरणीय इति ।

नन्वत्र सुपः प्रागकचि कृते, प्रत्यये परतस्त्वामादेशयोः सतोरपि "योऽचि" इति यत्वं न स्यात्, विभक्तिपरत्वादिति चेत् । मैवम् । 'अकृतव्यूहाः पाणिनीयाः' इति परिभाषया अनित्यतामाश्रित्याकचः पूर्वमेव यत्वविधानात् । एवं 'युवकाम्, आवकाम्' इत्यत्राप्यकचः पूर्वमेव युवावादेशाविति दिक् ।

द्विशतिकाम्—'द्वौ शतौ व्यवसृजति' इति विग्रहे "दण्डव्यवसर्गयोश्च" इति सूत्रेण वुन्प्रत्ययेऽनुबन्धलोपे "युवोरनाकौ" इत्यनेन वोरकादेशे द्विशतिकाम् इत्यत्र कर्मणि द्वितीया भवतीति दिक् ।

परस्परम्—इत्यत्र "नित्यवीप्सयोः" इत्यनेन वीप्सायां परशब्दस्य द्वित्वे"असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः" इति वार्तिकेन सु इत्यादेशे अनुबन्धलोपे रुत्वे विसर्गे च विहिते कस्कादित्वाद्विसर्गस्य सत्वे प्रातिपदिकत्वात्सोः सोरमादेशे परस्परम् इति सिद्धयति ।

## ६—प्रश्नोत्तराणि

उ०—"असमासे निष्कादिभ्यः"—निष्क, पण, पाद, माष, वाह, द्रोण षष्टि इति सप्तनिष्कादयः । तत्र द्रोणशब्दः परिमाणवाची, षष्टिशब्दः संख्यावाची, ताभ्यां ठञि प्राप्ते वचनम् । समासे इत्यधिकृत्यानेन सूत्रेण ठञ् विधानेन विधित्वमस्य वाच्यम् । तल्लक्षणं तु—साक्षाल्लक्ष्यसंस्कारकसाधुत्वप्रकारकबोधजनकत्वम् । इतरेषां तु पञ्चानामुन्मानवाचित्वेन पूर्वसूत्रेणैव ठकि सिद्धे समासप्रतिषेधार्थं वचनम् । नचैवं "परिमाणं तु सर्वतः" इतिभेदेन व्युत्पादनं व्यर्थमिति वाच्यम् "प्रमाणापरिमाणाभ्यां संख्यायाश्चापि संशये"इत्यादावस्योपयोगादिति पक्षद्वयमप्येतत्पदमञ्जर्यां स्पष्टमिति ।

सिकता—सिकताः सन्त्यस्मिन्देशे इति विग्रहे सिकताशब्दात् नित्यं बहुवचनान्तात् इति "सिकताशर्कराभ्यांश्च" "देशे लुबिलचौ च" इति

लुपि प्रातिपदिकावयवत्वात् सुपो लुकि युक्तवद्भावाद्विशेष्यस्य देशस्य एकत्वेऽपि बहुवचने सिकताः इति रूपम्। तस्मादेव इलचि प्रत्यये सिकतिल अणो लुबभावे सैकतः, मतुपि च सिकतावान् इति रूपम्।

## ७—प्रश्नोत्तराणि

उ०—"न नञ्पूर्वात्तत्पुषादचतुरसङ्गतलवणवटयुधकतरसलसे-भ्यः" अत्र सूत्रे नञ्पूर्वात् इत्युत्तरस्य प्रतिषेधो वक्तव्य इति भाष्यात्—इतःपरं त्वतल्विधेरूर्ध्वम् ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन् वर्जयित्वा। तत्र अपतित्वम् इत्यत्र पतेर्भावः कर्म वेति पतित्वम्। न पतित्वम् इति अप-तित्वम् इह "पत्यन्तपुरोहितादिभ्यो यक्" इति यक् तु न सम्भवति।

अपटुत्वमित्यत्र पटोर्भावः कर्म वेति पटुत्वम्। न पटुत्वम्—इति—अपटुत्वम्—इह "इगन्ताच्च लघुपूर्वात्" इत्यण् न भवति।

"इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" इन्द्रियमिति—इन्द्रलिङ्गमित्याद्यर्थेषु इन्द्रियम् इति भवति।

तत्र इन्द्रशब्दात् यथायोगं षष्ठीतृतीयान्तात् लिङ्गमित्याद्यर्थेषु घच् निपात्यत इति यावत्।

"स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति। तस्मादिदन्द्रो नामेदन्द्रो ह्वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते" इति श्रुतेः, इन्द्र आत्मा, तस्य लिङ्गं करणेन कर्तुरनुमानात्। इति करणम् प्रकारार्थम्। इन्द्रेण दुर्जयमिन्द्रियम्।

"मतजनहलात्करणजल्पकर्षेषु" तत्र मतं ज्ञानमिति-मन धातोः भावे क्त इति भावः। तस्य करणं भावः साधनं वेति—कृञ्धातो र्भावे करणे वा ल्युटि करणशब्दः। तेन जननक्रिया वा जननसाधनं वा विवक्षितमित्यर्थः। मत्यमि-ति—अत्र पूर्वोक्तसूत्रेण यति प्रत्यये कृते मत्यमिति सिद्ध्यति। ज्ञानस्य जननक्रिया जननसाधनं वा विवक्षितमित्यर्थः।

"तमधीष्टो भृतो भूतो भावी" द्वितीयान्तात् अधीष्टादिष्वर्थेषु ठञ् स्या-दित्यर्थः। अधीष्टः सत्कृत्य व्यापारितः [ प्रेरितः ] इति यावत्। भृतो—वेतनेन क्रीतः। भूतः—स्वसत्तया व्याप्तकालः। भावी—तादृश एवानागतकालः स्वसत्तया-व्याप्तकाल इत्यर्थः मासमधीष्टो मासिकोऽध्यापकः। मासमधीष्ट इत्यादौ "काला-

-ध्वनोरत्यन्तसंयोगे" इति द्वितीया । मासमधीष्ट इति विग्रहे पूर्वोक्तसूत्रेण ठञि ठस्येकादेशे ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते मासिकः इति सिद्धयति ।

एवं मासं भृतः मासिकः कर्मकरः । मासं भूतो मासिको व्याधिः । मासं भावी मासिकः उत्सवः ।

---

१९३४

३ वर्षं २ पत्रम् ।

१—( क ) यद्यपि ङिच्चेत्ययमपवादस्तथापीति ।

( ख ) ङित्वोक्ते क्षीयते क्वचिदिति ।

( ग ) आम्प्रत्ययवदिति सूत्रे कृञ्ग्रहणसामर्थ्यादिति । निर्दिष्ट-फक्किकासु काचनान्यतमा सशङ्कासमाधानं व्याख्येया ॥ ८ ॥

२—"अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।

"ऋद्न्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत् ॥ २ ॥

इयं कारिका सप्रमाणं व्याख्यायोदाहरणे सङ्गमनीया ॥ ६ ॥

३—भविता, एधाञ्चकृषे, ऊखतुः, गोपायाञ्चकार, जघृक्षे, तत्तद्विशे-षकार्योपन्याससम्मुखेनैतेषां सिद्धिप्रकारो लेख्यः ॥ १० ॥

४—अद्युतत् , ऊमतुः, परिष्कण्णः, उवोढ, विव्ययिथ, रूपाणीमानि साधु साधयत ॥ १० ॥

५—अधोक् , युयात् , एधि, उड्ढि, विदाङ्कुरुतात् , जक्षति, विशेष-सूत्रनिर्देशपूर्वकमेते प्रयोगाः साधनीयाः ॥ १० ॥

६—( क ) "बाहुप्रतिष्टम्भविवृद्धमन्युः"।

( ख ) "उदयति विततोर्ध्वरश्मिरज्जौ" ।

( ग ) "कमलवनोद्घाटनं कुर्वते ये" ।

( घ ) विज्ञापना भर्तृषु सिद्धिमेति" ।

एतेषु अधोरेखाङ्कितानां सिद्धिप्रकारो विरोधप्रदर्शनपुरस्सरं वाच्यः ॥ ६ ॥

## १—(क)प्रश्नोत्तराणि

**उ०—यद्यपि ङिच्चेत्ययमपवादस्तथापीति—**

ननु भवतादित्यनुपपन्नम्, तुह्यिस्थानिकादेशभूतस्य तातङो ङित्वेन तस्याने-कालत्वेऽपि आनङादाविव बाधकस्य "ङिच्च" इत्यस्य सद्भावात्तेनाऽन्त्यस्थाने तातङ्प्रवृत्तेरनेकालत्वेऽस्य बोधनादिति चेन्न। अनन्यफलङित्त्वे आनङादौ चरिता-र्थस्योक्तशास्त्रस्य गुणवृद्धिप्रतिषेधसम्प्रसारणादिफलकतातङ्ङित्वे मन्दप्रवृत्तस्य तस्य "अनेकालशित्सर्वस्य" इत्यनेन परेण बाधात्। आनङादौ ङित्वस्यान्त्यादेशा-तिरिक्तफलाभावात्। न च सर्वादेशे गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थत्वम्, गुणवृद्धिप्र-तिषेधसम्प्रसारणाद्यर्थत्वे सति सर्वादेशत्वमित्युभयोः परस्परापेक्षणादन्योन्याश्रय इति वाच्यम्। "एरुः" इत्येतदनन्तरम् "तिह्योस्तातङाशिष्यन्यतरस्याम्" इति न्यासे इकारस्यानुवृत्त्यैव सिद्धौ ङित्वस्य सर्वादेशत्वविधानार्थत्वकल्पनयोक्तदो-षाऽयोगादित्याशयेनाह—अनेकाल्त्वात्सर्वादेशः—यद्यपि "ङिच्च" इत्ययमपवाद-स्तथाप्यनन्यार्थङित्वेऽनङादिषु चरितार्थं इति गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतया सम्भवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण बाध्यते।

इहोत्सर्गापवादयोरपि समबलत्वात्। इति।

## १—(ख)प्रश्नोत्तराणि

**उ०—ङित्वोक्तेर्ज्ञायते क्वचिदिति १५ पृष्ठे द्रष्टव्यम्।**

## २—प्रश्नोत्तराणि

**उ०—"अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्"।**

"ऋदन्तईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्॥

अयम्भावः—'उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात्' इति—"अचस्तास्वत्थल्यनिटो नित्यम्" इति सूत्रस्य सूत्रार्थः। तत्र तासाविव तास्वदिति सप्तम्यन्ताद्वतिः। यथा तासौ न भवति, एवं थल्यपी-त्यर्थः। तेन तासौ दृष्टस्येडभावस्य थल्यतिदेशः। तेनादेर्यंस्कादेशे जघस्थ इत्यत्र नित्यमिट्।

अत्र सूत्रे तासीति नेति चानुवृत्त्यैवेष्टसिद्धेः, तास्वदित्येतन्नातीवोपयुज्यत इति

केचित् । अन्येतु—तस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेध इत्येतल्लाभार्थं तत् । तेन उवयिथ, जघसिथ, इत्यत्र न निषेध इत्याहुः ।

"उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्नस्यादिति" उपदेशेऽत्वतः" इति सूत्रस्य सूत्रार्थः । तेन पपक्थ, इयष्ठ इति च सिद्धयति ।

"तासौ नित्यानिट् ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन" । तेनान्यस्य स्यादेवेति । "ऋतो भारद्वाजस्य" इति सूत्रस्य सूत्रार्थः । अत्र सूत्रे—तपरकरणात् "कॄ गॄ" प्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्तते । ह्रस्वान्तेषु हृञ्भृञादिषु "अचस्तास्वत्थल्यनिटो नित्यम्" इत्येव सिद्धं वृङ्वृञौ तु यद्यपि सेटौ तथापि वृङः थल्येव नास्ति, आत्मनेपदित्वात्, वृञस्तु—छन्दसि ववर्थ इति निपातनाव् ववरिथ इति भाषायामिटा भाव्यम् । तस्मान्नियमोऽयमित्याह—ऋदन्तादेवेति । जहर्थ, दधर्थ । तेन—अन्यस्य स्यादेवेति । एवं च भारद्वाजमते स्यादन्यमते न स्यादिति इड्विकल्पः फलितः । पपिथ, पपाथ, पेचिथ, पपक्थ, इयजिथ इयष्ठ । इत्याद्युदाहरणानि ।

तथाचायमत्रसंग्रहः—"अजन्तोऽकारवान्वा यस्तास्यनिट्थलिवेडयम् ।
ऋदन्तईदृङ्नित्यानिट्क्राद्यन्यो लिटि सेड् भवेत् ॥"

अत्र "अकारवान्वेत्यस्य ह्रस्वाकारवानित्यर्थः । ईदृगिति । यस्तास्यनिट् । स ऋदन्तः थलि नित्यानिट् भवतीत्यर्थः ।

ननु—स्तुद्रुस्रुश्रुवामपि थलि भरद्वाजनियमादिट् स्यात् । नचैवं क्रादिसूत्रे तेषां पठनं निरर्थकं स्यादिति वाच्यम् । तत्पठनस्य वमादिष्वनिवृत्यर्थतया सफलत्वात् । अन्यथा । क्रादिनियमात्—तत्र इडागमो दुर्वारः स्यादित्याशङ्क्याह—न च स्तुद्रुवादीनामपि थलि विकल्पः शङ्क्यः । 'अचस्तास्वदिति' 'उपदेशेऽत्वतः' इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः । क्रादियोगप्रापितस्य तु न निवर्तक इति भावः । कुत इत्याकाङ्क्षायामाह—अनन्तरस्येति न्यायात् ।

नन्वेवम् "उपदेशेऽत्वतः" इत्यस्यैव बाधः स्यादिति वाच्यम् अत्वत्सु धातुषु ऋदन्तत्वादर्शनेन यद्यत्वतः थलि इण्निषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात् ।

ननु—तर्हि अचस्तास्वदित्यस्यैव बाधो अस्तु तत्कथं योगद्वयप्रापितस्येत्युक्तम् । अत्राहुः—"उपदेशेऽचस्तास्वदिति" सूत्रे कृतेऽपि तास्वनिट्थलीत्यादिपदानामिवोपदेशपदस्याप्यनुवृत्तिसम्भवे अत्वत इति सूत्रे उपदेशपदस्याच् इति पूर्वसूत्रे तु तास्वत्थलीत्यादेश्चाकरणादुभयोः समानयोगक्षेम इति विज्ञायते । तस्मादिष्टानुरोधाच्च योगद्वयमपि भारद्वाजनियमेन बाध्यते । यदि तु—"उपदेशेऽत्वतोऽचस्तास्वत्थल्यनिटो नित्यम्" इति एको योगः स्वीक्रियते । तदात्र नास्त्येव शङ्कालेशोऽपीति बोध्यमिति । अन्ये तु व्याचक्षते— अचस्तास्वदिति' सूत्रानन्तरमेव "ऋतो भारद्वाजस्य" इति पठनीयम् । द्वयोरनन्तरमस्यारम्भादिह तास्वत्थल्यनिटो नित्यं तासीत्यनुवर्त्य योऽयं तासि नित्यानिटस्थलि इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैवेति व्याख्यायते । तेन सर्वेष्टसिद्धिः ।।

यद्वा—क्रादिसूत्रे स्तुप्रभृतीनां ग्रहणमेवेड्द्वयस्यापि क्रादिनियमभारद्वाजनियमप्रापितस्य च बाधकमस्तु पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् । अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाधेतेत्येतदर्थो हि स आरम्भः । अमुमेवार्थं सिद्धवत्कृत्य ततश्चतुर्णां थलि भरद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थमिति मूलेऽप्युपनिबद्धमिति दिक् ।

## ३—प्रश्नोत्तराणि

उ०—भविता—७५ पृष्ठे द्रष्टव्यम् ।

एधाञ्चकृषे—७५ पृष्ठे द्रष्टव्यम् ।

कृतवतुः—४० पृष्ठे द्रष्टव्यम् ।

गोपायाञ्चकार—गुप्धातो लिटि तिपि "लिट् च" इत्यनेन आर्धधातुकसञ्ज्ञायाम् "आयादय आर्धधातुके वा" इतिसूत्रेण विकल्पेन आय् प्रत्यये "पुगन्तलघूपधस्य च" इत्यनेन गुणे गोपाय् ति इति जाते "कास्प्रत्ययादाममन्त्रे लिटि" इत्यनेन आमि 'आर्धधातुके' इत्यधिकृत्य "अतो लोपः" इत्यनेन अकारस्य लोपे गोपायाम् ति इति जाते "आमः" इत्यनेन लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" कृ अनुप्रयोगकलिटि प्रयोगे तिपि तिपो णलि णकारलकारस्य चेत्सञ्ज्ञायां लोपे च कृते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" "उरत्" इत्यनेनात्वे गुणे च कृते गोपायां कर कृ अइति जाते

इत्यनेनाभ्याससञ्ज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे गोपायां च कृ अ इति जाते "अचो ञ्णिति" इत्यनेन ऋकारस्य गुणवृद्धी अरारौ भवति इति वचनबलात् ऋकारस्य 'आर्' वृद्धौ संयोगे च गोपायाञ्चकार इति सिद्ध्यति ।

जघृक्षे—२८ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि

उ०—अद्युतत्—द्युत् धातौ लुङि "द्युद्भ्यो लुङि" इत्यनेन विकल्पेन परस्मैपदे तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे अनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिचि प्राप्ते "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इत्यनेन अङि कृते अनुबन्धलोपे अद्युतत् इति सिद्ध्यति । परस्मैपदाभावे तु—आत्मनेपदे त प्रत्यये अडागमे च्लौ "च्लेः सिच्" इत्यनेन सिचि इत्वाविती "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमेऽनुबन्धलोपे "पुगन्तलघूपधस्य च" इत्यनेन गुणे अद्योति स त् इति जाते "आदेशप्रत्यययोः" इत्यनेन सकारस्य षत्वे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे च कृते 'अद्योतिष्ट' इति सिध्यति ।

भ्रेमतुः—चलनार्थक-उकारेत्सञ्ज्ञक भ्रम् धातौ लिटि तस्प्रत्यये—"परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन अतुसि—"लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेन अभ्याससञ्ज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे प्राप्ते "वा जॄभ्रमु त्रसाम्" इत्यनेन विकल्पेन एत्वाभ्यासलोपयोः सकारस्य रुत्वे विसर्गे च भ्रेमतुः । इति सिद्ध्यति । तदभावे तु—बभ्रमतुः इति च सिद्ध्यति ।

परिष्कण्णः—गतिशोषणार्थक-इरेत्सञ्ज्ञक परि उपसर्गकस्कन्द्धातोर्निष्ठायां क्तप्रत्यये ( योगविभागादत्रानिष्ठायामित्यस्यासम्बन्धात् ) "परेश्च" इत्यनेन धातोर्सकारस्य विकल्पेन षत्वे—षत्वपक्षे "अनिदितां हल उपधायाः क्ङिति" इति सूत्रेण नकारस्य लोपे "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति तकारदकारयोर्नत्वे पूर्वनकारस्य णत्वे, उत्तरस्य च "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे सौ सकारस्य रुत्वे विसर्गे च कृते परिष्कण्णः इति सिद्ध्यति । षत्वपक्षे णत्वमिति—

नन्विदमनुपपन्नं षत्वस्य पदद्वयापेक्षत्वाद्बहिरङ्गत्वेनासिद्धत्वादिति चेन्न। धातूपसर्गयोः कार्यमन्तरङ्गमित्यभियुक्तोक्त्या षत्वस्यान्तरङ्गत्वबोधनेन प्राक्प्रवृत्तेः। पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन इति भाष्यमपि तत्र मानम्। पूर्वं धातुः साधनेन योगः पश्चादुपसर्गेणेति मतान्तरे तु नैव णत्वमित्यलम्।

उवोढ—प्रापणार्थक वहधातो लिटि सिपि थलि च कृतेऽनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन लोपे "वचिस्वपियजादीनां किति" इत्यनेन सम्प्रसारणे "ऋतो भारद्वाजस्य" इत्यनेन विकल्पेन इटि उवहिथ इति सिद्ध्यति। इडभावे तु "सहिवहोरोदवर्णस्य" इत्यनेन ओकारे "झषस्तथोर्धोऽधः" इत्यनेन थकारस्य धकारे ष्टुत्वे च कृते "ढोढे लोपः" इत्यनेन ढलोपे उवोढ इति च सिद्ध्यति।

विव्ययिथ—४९ पृष्ठे द्रष्टव्यम्।

## ७—प्रश्नोत्तराणि

उ०—अधोक् प्रपूरणार्थक दुह इत्यस्माद्धातो लङि तिपि अनुबन्धलोपे सार्वधातुकसञ्ज्ञायां शपि "अदिप्रभृतिभ्यः शपः" इत्यनेन शपो लुकि अडागमे अदुह् त इति जाते "दादेर्धातोर्घः" इत्यनेन हकारस्य घकारे "पुगन्तलघूपधस्य च" इत्यनेन गुणे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इत्यनेन दकारस्य भष्भावेन धकारे अधोघ् त् इति जाते तकारस्य "हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन लोपे कृते घकारस्य जश्त्वेन गकारे तस्य "वाऽवसाने" इत्यनेन विकल्पेन चर्त्वे अधोक्—अधोग—इति सिध्यति।

युयात्—मिश्रणामिश्रणार्थक यु धातो विधिलिङि तिपि अनुबन्धलोपे सार्वधातुकसञ्ज्ञायां शपि शपो लुकि च कृते "यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुडागमे अनुबन्धलोपे "सुट् तिथोः" इत्यनेन तकारस्य सुटि सुटा यासुट् न बाध्यते, लिङो यासुट् तकारथकारयो सुडिति विषयभेदात्। "लिङः सलोपोऽनन्तस्य" इत्यनेन सलोपे इति सकारद्वयस्यापि निवृत्तिः। सुटः श्रवणं त्वाशीर्लिङि आत्मनेपदे। तेन युयात् इति सिद्ध्यति। इह—"भाष्ये—पिच्चङिन्नेति"—व्याख्यानात् उकारस्य "उतो वृद्धिर्लुकि हलि" इत्यनेन वृद्धिर्न। विशेषविहितेन ङित्वेन पित्त्वस्य बाधात्।

पधि—१९ पृष्ठे द्रष्टव्यम् ।

उडूढि—वश धातोर्लोटि सिप् प्रत्यये "सेह्यपिच्च" इत्यनेन ह्यादेशे वश हि इति जाते शपो लुकि "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन शस्य षत्वे "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इत्यनेन सम्प्रसारणे षस्य जश्त्वेन डकारे "होढः" इत्यनेन ढत्वे च कृते उडूढि इति सिद्ध्यति ।

विदाङ्कुरुतात्—ज्ञानार्थकविदधातोर्लोटि तिप् प्रत्यये "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" इत्यनेन आम्प्रत्यये लोटो लुकि च कृते निपातनात् इति शब्दबलात् कृ इत्यनुप्रयोगक लोट्प्रयोगे तस्य तिपि, शपि प्राप्ते अपवादत्वात्तं प्रबाध्य "तनादिकृञ्भ्यः उः" इत्यनेन उप्रत्यये "तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" इत्यनेन तातङि ङकारस्येत्सञ्ज्ञायां लोपे च कृते "अत उत्सार्वधातुके" इत्यनेन कृञोऽकारस्य उकारे सूत्रे उदिति तपरकरणसामर्थ्याद्गुणाभावे आमिति मकारस्यानुस्वारे परसवर्णे च कृते विदाङ्कुरुतात् इति सिध्यति ।

जक्षति—जक्षधातोर्लटि बहुवचनविवक्षायां झिप्रत्यये "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसञ्ज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि "अदिप्रभृतिभ्यः शपः" इत्यनेन शपो लुकि "झोऽन्तः" इत्यनेन अन्तादेशे प्राप्ते अपवादत्वात्तं प्रबाध्य "अदभ्यस्तात्" इत्यनेन अदादेशे जक्षति इति सिद्ध्यति ।

## ६—प्रश्नोत्तराणि

उ०—( क ) बाहु प्रतिष्टम्भ विवृद्धमन्युरिति प्रति उपसर्गपूर्वकात् सौत्रार्थकस्तन्भधातोः "भावे" इत्यनेन घञ् प्रत्यये अनुबन्धलोपे "स्तन्भे" स्तन्भेः सौत्रस्य सस्य षत्वं स्यादित्यर्थकेन सस्य षत्वे ष्टुत्वे बाहुप्रतिष्टम्भ विवृद्धमन्युः" इति सिद्ध्यति ।

स्तन्भेः सौत्रस्येति—"स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यःश्नुश्च" इति सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु ष्टभि प्रतिबन्धे इत्यस्येति भावः । एवम् "जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च" इत्यङ्विधायकसूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यम् । एतच्च "लक्षणप्रतिपदोक्तपरिभाषया" लभ्यते । सौत्रोहि धातुर्नकारोपध इति प्रतिपदोक्तः । इदित्वान्नुमि ष्टभिर्लाक्षणिकः । तेन

विस्तम्भते इत्यादौ षत्वं न "उद्ः स्थास्तम्भोः पूर्वस्य" इति सूत्रे मकारोपध-ग्रहणेनोभयोरपि ग्रहणादुत्तम्भते इति द्वयोरपि तुल्यं रूपम्। मकारस्योभयत्रापि लाक्षणिकत्वात्। अत्र एकयोगकरणेनैव सिद्धे योगविभागउत्तरार्थः। उत्तरसूत्रे स्तन्भेरेवानुवृत्त्यर्थ इति भावः।

ननु "सदिस्तन्भ्योः" इति सूत्रितेऽपि एकदेशे स्वरितत्वप्रतिज्ञानात् कथ-ञ्चिदनुवृत्तिर्भविष्यतीत्यत आह—किञ्च अप्रतेरिति नानुवर्तते "बाहुप्रतिष्टम्भविवृद्धमन्युः" तथा च "स्तम्भेः" इत्यत्राऽननुवृत्तये योगविभाग आवश्यक इति भावः।

( ख ) "उदयति विततोर्द्ध्वरश्मिरज्जौ" अय् धातोर्लटि अयते इति रूपम्। तत्र निसूदुसोरुत्वस्यासिद्धत्वान्न लत्वम्-'निरयते' दुरयते इति रूपम्। निर्दुरोस्तु—लत्वं भवति। तेन—निलयते दुलयते इति। प्रत्यय। इति त्विणो रूपम्।

ननु तर्हि—कथम्—'उदयति विततोर्द्ध्वरश्मिरज्जाविति माघः' शानचा भाव्य-मिति तेन उद्यमानः इति स्यात् 'इटकिटकटी' इत्यत्र प्रश्लिष्टस्य भविष्यति। यद्वा अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम्। तत्र मानम् चक्षिङो ङित्करणा-ज्ज्ञापकादिति।

( ग ) "कमलवनोद्घाटनं कुर्वते ये" चेष्टार्थक घटधातोर्लटि आत्मनेपदे घटते इति रूपम्। अत्र—वक्ष्यमाणेन "घटादयो मित" इति वचनबलात् मित्संज्ञा भवति। तत्फलं तु णौ "मितां ह्रस्वः" इति—"चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इति च वक्ष्यते। "ये धातवोऽन्यत्राधीतास्तेषामिह पाठोऽर्थनियमार्थः। ये त्विहैव पठ्यन्ते तेषामुपसर्गादिनार्थान्तरपरत्वेऽपि मित्त्वमस्त्येवेति धातु-वृत्त्यादिषु स्थितम्। तदेतत् ध्वनयन्नुदाहरति। 'घटयति' 'विघटयति' इति ननु कथं तर्हि "कमलवनोद्घाटनं कुर्वते ये "प्रविघाटयिता समुत्पतन् हरि-दश्वः कमलाकरानिव" इत्यादि शृणु। अत्रोच्यते 'घट संघाते' इति चौरादिकस्ये-दम्। न च तस्यैवार्थविशेषे मित्वार्थमनुवादोयमिति वाच्यम्। तत्र नान्ये मितोऽहेताविति निषेधात्। अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः।

( घ ) "विज्ञापना भर्तृषु सिद्धिमेति" "मारणतोषण-निशामनेषु ज्ञा" निशामनमित्यस्य शम आलोचने इत्यस्मान्निष्पन्नत्वाह—निशामनं चाक्षुषज्ञा-

नमिति माधवः । ज्ञापनमात्रमित्यन्ये निशानेष्विति पाठान्तरम् । तत्र निशानं तीक्ष्णीकरणम् । एष्वेवार्थेषु जानातिर्मित् भवति "पशुं संज्ञपयति"मारयतीत्यर्थः । विष्णुं विज्ञपयति । सन्तोषयतीत्यर्थः । संज्ञपयति रूपम् । माधवमते दर्शयतीत्यर्थः । मतान्तरे तु बोधयतीत्यर्थः । प्रज्ञपयति शरम् । तीक्ष्णी करोतीत्यर्थः । स्यादेतत् । निशामनं ज्ञापनमात्रमिति वदतां मते "श्लाघन्हुङ्स्थाशपां ज्ञीप्स्यमानः" इति सूत्रे ज्ञीप्समानो बोधयितुमभिप्रेतः इति वृत्तिग्रन्थः संगच्छतां नाम माधवमते तु–तद्ग्रन्थस्य का गतिरित्यतआह—ज्ञप मिच्चेति चुरादौ । ज्ञापनं मारणादिकं च तस्यार्थः । एवञ्च वृत्तिग्रन्थो माधवमतेऽपि संगच्छत इति भावः । मारणादिकञ्चेति । एतच्च मतान्तराभिप्रायेणोक्तम् । चुरादिषु तु "ज्ञप मिच्च" अयं ज्ञाने ज्ञापने च वर्तत इति वक्ष्यमाणत्वात् ।

ननु तर्हि कथम् "विज्ञापना भर्तृषु सिद्धिमेति" अत्र ज्ञाधातोः ज्ञपधातोश्च णौ मित्वात् ह्रस्वेन भवितव्यमिति । "तज्ज्ञापयत्याचार्य इति च" । शृणु—माधवमते—अचाक्षुषज्ञाने मित्वाभावात् । एवञ्च बोधने ज्ञा धातोः 'ज्ञापयति' ज्ञपधातोस्तु ज्ञपयतीति रूपद्वयम् माधवमते बोध्यम् । ज्ञापनमात्रे मित्वमिति मते तु ज्ञा नियोग इति चौरादिकस्य, धातूनामनेकार्थत्वात् । निशानेष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिरिति दिक् ।

---

१९३५

## ३ वर्षे १ पत्रम्

१—"शेषे" इति सूत्रस्य लक्षणत्वमधिकारत्वं च पृथगुपपादनीयम् ।

२—शौवस्तिकम्, पाराशरिणः, कांस्यम्, गार्हपत्यः, इत्येतान् प्रयोगान् संलक्ष्य ठगधिकारविहितानां षित्प्रत्ययानां विधायकानि सूत्राण्युपन्यस्योदाहरणानि यथायथं प्रदर्शनीयानि । उदाहरणानां साधनं नापेक्षितम् ।

३—'आचार्यभोगीनः, श्लैष्मिकम्, द्विवार्षिकः, कार्मुकम्, प्रथिमा, कर्णजाहम्, ज्योत्स्ना, पैषमः, एतेषां यथाशास्त्रं साधनं विधेयम् ।

४—करिष्ठः, षडिकः; ईश्वराधीनः, बीजाकरोति। लोहनिका शाटी, एकैकस्मै देहि, एतान् प्रयोगान् संसाध्य नित्यानां स्वार्थिकप्रत्ययानां परिगणनं क्रियताम्।

५—(१) चतुर्थादनजादौ च लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्टः उवर्णाल्ल इलस्य च॥
(२) द्लद्वये टावभावः क्लीवे चादद्विरहः स्त्रमोः।
समासे सारलुक् चोत सिद्धं बाहुलकान्नथम्।
अनयामध्ये स्वेच्छया कस्यचिदेकस्य सोदाहरणा व्याख्या विधेया।

## १—प्रश्नोत्तराणि

उ०—"शेषे" इति सूत्रस्य लक्षणत्वमधिकारत्वं चेति ३८ पृष्ठे द्रष्टव्यम्।

## २—प्रश्नोत्तराणि

उ०—शौवस्तिकम्—श्वस् इत्यव्ययात् जाताद्यर्थे "श्वसस्तुट् च" इत्यनेन ठञ् प्रत्ययेऽनुबन्धलोपे ठस्येकादेशे तुडागमे च कृते वकारात्पूर्वमैजागमेन औकारे प्रातिपदिकत्वात्सौ सोरमादेशे शौवस्तिकम् इति सिद्ध्यति।

पाराशरिणः—पराशरशब्दात् गर्गादित्वात् गोत्रे यञि पाराशर्यः व्यासः—इहत्वनन्तरापत्ये गोत्रत्वारोपाद्यञ्। तेन प्रोक्ते भिक्षुसूत्रे इति विग्रहे "पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" इत्यनेन णिनि प्रत्यये अनुबन्धलोपे ततोऽध्येतृप्रत्ययस्य छस्य लुकि प्रातिपदिकत्वाज्जसि जकारस्येत्सञ्ज्ञायां लोपे च कृते सकारस्य रुत्वे विसर्गे च पाराशरिणः इति सिद्ध्यति।

कांस्यम् ४५ पृष्ठे द्रष्टव्यम्।

गार्हपत्यः—गृहपतिर्यजमानस्तेन संयुक्त इत्यर्थे गृहपतिशब्दात् "गृहपतिना संयुक्ते ञ्यः" इति ञ्यप्रत्यये ञित्वात् "तद्धितेष्वचामादेः" इत्यनेन आदिवृद्धौ भसंज्ञायाम् "यस्येति च" इतीकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते गार्हपत्यः इति सिद्ध्यति।

षित्प्रत्ययविधायकानि सूत्राणि तदुदाहरणानि च—तद्यथा—प्राग्वहतेष्ठक्" माशब्दिकः। "नौद्व्यचष्ठन्" नाविकः घटिकः "आकर्षात्ष्ठल्" आकर्षिकः, आकर्षकी "पर्पादिभ्यः ष्ठन्" पर्पिकः, पर्पिकी। "श्वगणा-

ठञ् च" चात्ष्ठन्, इत्यादं ष्टिः । "भक्त्रादिभ्यष्ठन्" भक्त्रिकः, भक्त्रिकी, "कुसीददशैकादशात्ष्ठन्ष्ठचौ" कुसुदिकः, कुसुदिकी । दशैकादशिकः दशैकादशिकी । "किसरादिभ्यः ष्ठन्" किसरिकः, किसरिकी । "आवसथात् ष्ठल्" आवसथिकः, आवसथिकी इत्यादि ।

## ३—प्रश्नोत्तराणि

उ०—आचार्यभोगीनः—इत्यत्र आचार्यशब्दात् परस्य भोगीनशब्दस्य नस्य "आचार्यादणत्वं च" इति वार्तिकेन णत्वाभावे आचार्यभोगीनः इति सिद्धयति । नचासमानपदस्थत्वादेवात्र णत्वस्याप्रसक्तेस्तन्निषेधो व्यर्थ इति वाच्यम् । मातृभोगीणादौ णत्वज्ञापनार्थत्वादिति ।

श्लैष्मिकम्—श्लेष्मणः शमनं कोपनं वेति विग्रहे "वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्" इति वार्तिकेन ठञ्प्रत्यये अनुबन्धलोपे ठस्येकादेशे ञित्वादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे श्लैष्मिकम् इति सिद्धयति ।

द्विवार्षिकः—द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीतिविग्रहे—"वर्षाल्लुक् च" इत्यनेन विकल्पेन ख प्रत्यये पक्षे ठञ् वा च लुकि "वर्षस्याभविष्यति" इत्यनेन उत्तरपदवृद्धौ ठस्येकादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च द्विवार्षिकः इति साधु ।

कार्मुकम्—कर्मणे प्रभवति इति विग्रहे "कर्मण उकञ्" इत्यनेन उकञ्प्रत्यये ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे कार्मुकम् इति सिद्धयति ।

प्रथिमा—पृथोर्भाव इति विग्रहे पृथुशब्दात् "पृथ्वादिभ्यः इमनिज्वा" इति सूत्रेण विकल्पेन इमनिच् प्रत्ययेऽनुबन्धलोपे "र ऋतोहलादेर्लघोः" इत्यनेन ऋकारस्य रकारे उकारस्य गुणं बाधित्वा "टेः" इति सूत्रेण टेर्लोपे प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपे च कृते प्रथिमा इति सिद्धयति । इमनिजभावे—"इगन्ताच्चलघुपूर्वात्" इत्यनेन अणि णित्वादादिवृद्धौ गुणे अवादेशे प्रातिपदिकत्वात्सौ सोरमादेशे प्रार्थवम् इति सिद्धयति ।

कर्णजाहम्—कर्णस्य मूलमिति विग्रहे कर्णादिभ्यः मूलेऽर्थे "तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ" इत्यनेन जाहच्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे कर्णजाहम् इति सिद्धयति ।

  

ज्योत्स्ना—ज्योत्स्नावयवा ज्योतींषि तान्यस्यां सन्तीति विग्रहे ज्योतिष-शब्दात् "ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलिमसाः" इत्यनेन मत्वर्थे निपातनात् न प्रत्यये उपधाभूतस्य इकारस्य लोपे च कृते सति च इकारस्य लोपे इणः परत्वाभावात् षत्वनिवृत्तौ ज्योत्स्ना इति रूपं सिद्ध्यति । "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः ।

ऐषमः—१४ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि

उ०—करिष्ठः—६३ पृष्ठे द्रष्टव्यम् ।

षडिकः—२३ पृष्ठे द्रष्टव्यम् ।

ईश्वराधीनः—४७ पृष्ठे द्रष्टव्यम् ।

बीजाकरोति—बीजेन सह कर्षति इति विग्रहे—"कृञो द्वितीयतृतीय-शम्बबीजात्कृषौ" इत्यनेन डाचि प्रत्ययेऽनुबन्धलोपे—"बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । तेन बीजाकरोति इति सिद्ध्यति ।

लोहिनिका शाटी—लोहित एवेति विग्रहे "रक्ते" इति सूत्रेण स्वार्थे कनि "वर्णादनुदात्तात्तोपधात्तो नः" इति सूत्रेण तकारस्य नकारादेशे लोहितिका लोहिनिका वा शाटी इति सिद्ध्यति । अत्र "प्रातिपदिकात्तद्धितः" इति पक्षस्य प्रतिपदविधानमात्रेणापवादत्वमिति पक्षस्य चाश्रयणे "वर्णादनुदात्तात्तोपधात्तो नः" इत्यतः प्रागेव कनि कृते लोहितिकेति रूपं न स्यादित्याशङ्कायामाह लिङ्गबाधनं वेति । लोहितादित्युपलक्षणम् एतिका एनिकेत्यादेरपि संप्राप्तत्वात् । "सुबन्तात्तद्धिताः" इति पक्षस्य "निरवकाशत्वमपवादत्वम्" इतिपक्षस्य च मुख्यत्वात्तदाश्रयणे तु "वर्णादनुदात्तात्तोपधात्तो नः" इत्यस्यानन्तरमेव कनः प्रवृत्तेः कन्प्रत्ययस्य पुंलिङ्गे सावकाशतया निरवकाशत्वाभावाच्च वार्तिकमिदं न कर्त्तव्यम् । अत एव ङ्याब्ग्रहणं व्यर्थमिति स्वाम्पीति रूपं प्रबलमिति च मनोरमादावुक्तमिति दिक् ।

एकैकस्मै देहि—इह "एकं बहुव्रीहिवत्" इति सूत्रेण द्वयोरपि सुपो लुकि पुनः सर्वादिपठितैकशब्दान्ततया सर्वनामत्वात् स्मैभावस्तेन एकैकस्मै देहि इति सिद्ध्यति ।

## ८—प्रश्नोत्तराणि

उ०—( १ ) चतुर्थादनजादौ वेति—५४ पृष्ठे द्रष्टव्यम् ।

१९३५

३ वर्षे २ पत्रम् ।

१—भवेयुः, एधाञ्चक्रे, निषेधति, विवयिथ, तत्तद्विशेषकार्योपन्यासमुखेनैषां सिद्धिप्रकारो लेख्यः ।

२—अचीकमत, स्यन्त्स्यति, जुगुप्सते, विव्याय, विशेषसूत्रनिर्देशपुरस्सरमेते प्रयोगाः साधनीयाः ।

३—"श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि" ॥ इयं कारिका सप्रमाणमुदाहरणमुखेन व्याख्येया ।

४—अद्विषन्, अध्यगीष्ट, सुषुपतुः, अजागरीत्, रूपाणीमानि साधु साधयत ।

५—ओप्यायीवृद्धौ, गुहू संवरणे, धेट् पाने, ऊर्णुञ् आच्छादने धातूनामेषां लुङि प्रथमपुरुषैकवचने कति रूपाणि, कथञ्च तत्सिद्धिः ।

६—( क ) "अनुदात्तङित आत्मनेपदम्" इति सूत्रे धातोर्लस्येत्यर्थः कुतो लभ्यते, किञ्च तत्फलम् ।

( ख ) "भुवोवुग्लुङ्लिटोः" इत्यत्र लुङ्लिटोरचीति विशेषणस्य किं प्रयोजनम् ।

## १—प्रश्नोत्तराणि

उ०—भवेयुः—८९ पृष्ठे द्रष्टव्यम् ।

एधाञ्चक्रे—एध् इत्यस्य "भूवादयो धातवः" इत्यनेन धातुसञ्ज्ञायां धातुत्वाल्लिटि आत्मनेपदे तप्रत्यये "इजादेश्च गुरुमतोऽनृच्छः" इत्यनेन आमि आमो मकारस्य नेत्वमिति, 'कास्यनेकाजामुपसंख्यानात्' / 'आस्कासोराम् विधानाज्ज्ञापकात्' । "आमः" इत्यनेन लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन कृ अनुप्रयोजकलिट्प्रयोगे कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते "आम्प्रत्ययवत्क-

मोऽनुप्रयोगस्य" इत्यनेन–इह पूर्ववदित्यनुवर्त्य वाक्यभेदेन सम्बध्यते। पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति तेन इन्द्राञ्चकार इत्यादौ न तङ्। इति व्याख्यानादात्मनेपदे। "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशे एकारोच्चारणं ज्ञापकम्, तङादेशानां टेरेत्वं नेति। तेन डारौरसां न एधांक्र ए इति स्थिते "असंयोगाल्लिट्कित्" इत्यनेन कित्सञ्ज्ञायां "क्ङिति च" इति निषेधसामर्थ्यात् "सार्वधातुकार्धधातुकयोः" इति गुणो न द्वित्वात्परत्वाद्यणि प्राप्ते "द्विर्वचनेऽचि" इत्यनेन निषेधे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "उरत्" इत्यनेनाभ्यासऋवर्णस्याकारे रपरत्वे च कृते "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेनाभ्यासकवर्गस्य चवर्गादेशे पधाञ्चक्रे इति सिद्ध्यति।

निषेधति। नि इत्युपसर्गपूर्वकात् षिधूधातोः "धात्वादेः षः सः" इत्यनेन सत्वे लट्लकारे तिप्प्रत्यये अ बन्धलोपे "पुगन्तलघूपधस्य च" इत्यनेन गुणे "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इत्यनेन षत्वे निषेधति। इति सिद्ध्यति।

विव्ययिथ ४९ पृष्ठे द्रष्टव्यम्।

## २—प्रश्नोत्तराणि

उ०—अचीकमत—२७ पृष्ठे द्रष्टव्यम्।

स्यन्त्स्यति—४१ पृष्ठे द्रष्टव्यम्।

जुगुप्सते—६६ पृष्ठे द्रष्टव्यम्।

विव्याय—संवरणार्थकव्येञ्धातोर्लिटि तिपि तिपो णलि अनुबन्धलोपे—"आदेच उपदेशेऽशिति" इत्यनेन आत्वे प्राप्ते—"न व्यो लिटि" इत्यनेन निषेधे वृद्धौ च कृते द्वित्वेऽभ्याससंज्ञायाम् परमपि हलादिशेषं बाधित्वा यस्य सम्प्रसारणम्, उभयेषां ग्रहणसामर्थ्यात् अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन। ततोऽऽयादेशे च कृते विव्याय इति सिद्ध्यति।

## ३—प्रश्नोत्तराणि

उ०—श्तिपा शपाऽनुबन्धेनेति–ननु 'पिपक्षति' इत्यादाविव यङ्लुक्यपीण्निषेधः स्यादेवेत्याशङ्कायामाहस्मरन्ति ह्येति। श्तिपेत्यादि। तत्र श्तिपा यथा

-स्यति, हन्ति, याति, वाति, द्राति इत्यादि । तेन ग्रन्थजङ्घनीदित्यादौ "नेगदनद-पतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च" इति णत्वं न । शपा यथा भरेति । तेन बिभर्त्तेः भरतेः ( यङ्लुगन्तात् ) सनि बर्भरिषतीत्यत्र "सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इतीड्विकल्पो न, किन्तु नित्यमेवेट् । "एकाच—उपदेशेऽनुदात्तात्" इति निषेधाप्रवृत्तेः अनुबन्धेन निर्देशो द्विधा—स्वरूपेणेत्संज्ञकत्वेन च । स्वरूपेण यथा—शीङ्सार्वधातुके गुणः" "दीङो-युडचि क्ङिति" इति शेशितः देदितः । तस्मिन् क्त प्रत्यये चेमे क्रमेणोदाहरणे । इत्संज्ञकत्वेन यथा—"अनुदात्तङित:" तेन "स्पर्धशोङादिभ्यः" "अनुदात्तङित आत्मनेपदम्" इत्यात्मनेपदं न पास्पर्धीति । शेशयीति । गणो न यथा—वेभिदीति । "रुदादिभ्यः श्नम्" इति श्नम् न । एकाच्ग्रहणं प्रकृत सूत्रे । तेन वेभेदिता चेच्छेदिता इत्यादाविण्निषेधो न । एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते । अच इत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते । तेन वधे हन्त्युपदेशे एकाचोऽपि न निषेधः, आदेशोपदेशेऽनेकाच्त्वात् । अनुदात्ताश्चानुपदमेव संग्रहीष्यन्ते । एतच्चेति—"न च श्तिपाशपावंशे कथमिदं ज्ञापकमिति शङ्क्यम् । एकदेशानुमतिद्वारा सर्वत्र ज्ञापनस्य "उपपदमतिङ्" इत्यादौ दृष्टत्वात् । अत एव तत्र "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति सिद्धमित्युक्तम् । अनन्यार्थैः स्यन्ति हन्तिभरेत्यादिभिः श्तिबादिभिरेव ज्ञापनसम्भवाच्च । "अपरस्पराः क्रियासातत्ये" इति सूत्रे सातत्यग्रहणेन एकदेशानुमत्या "लुम्पेदवश्यमः कृत्ये" इत्यादि—पूर्वाचार्यश्लोको ज्ञापित इति तु तत्रैवावोचाम । मनोरमायान्त्वेकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषाया ज्ञापनस्य "गतिकारकोपपदानाम" इत्यादौ दृष्टत्वादित्युक्तम् । तदयुक्तमिति नव्याः "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इत्याद्येव हि पूर्वाचार्याणां परिभाषा । न च तज्ज्ञापनं तत्रैव दृष्टमिति युज्यते वक्तुमिति । तद्वत इति न च मत्वर्थलक्षणायां मानाभावः वसतीत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात् । नचेदानीमनुदात्तपाठः परिभ्रष्टः, आधुनिकानां वचति ।शाक्लस्यादिपाठस्त्वनार्षत्वान्न मानमिति शङ्क्यम् । पाणिनिना पठितानामेवानुदात्तधातूनामाधुनिकैर्व्याख्यातृपरम्परया संगृहीतत्वात् ।

अन्यथा एकः अच् यस्येति बहुव्रीहिलाभार्थमेकग्रहणे कृतेऽप्यनुदात्तपाठस्य परिग्रहत्वात् वसतिशक्लित्यादयोऽनुदात्ताः न तु भूवादय इति निर्धारणं न स्यात् । एक ग्रहणेति । नन्वेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामर्थ्यादित्युक्तौ परस्परव्याघातः स्यादिति चेत् । अत्राहुः—एकाच्शब्देनैकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः, किन्तु वस्तुगत्यैवैकाज्ग्रहणम्, तच्चैकग्रहणं विनैव लभ्यत इत्यदोष इति । वधेरिति–यस्तु–तद्व्यावृत्तयेऽनिट्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना स एव प्राचाऽनुसृतः । 'उदॄदन्तै यौति रक्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रिभिः वृङ् वृञभ्यां च विनैकाचः' स्वरान्ता धातवोऽनिट इति । सचादन्तपर्युदास इहोपेक्षितः, सूत्राननुगुणत्वात् । तथाहि 'सर्वे सर्वपदादेशाः' इति न्यायेन कृ इत्यादेः कर इत्यादिरादेशस्तस्य यथा स्थान्युपदेशं गृहीत्वा कर्ता हर्तेत्यादौ निषेधः प्रवर्तते । तथैव वधादेशेऽपि प्रवर्तमानः केन वार्यताम् । अदन्तपर्युदाससामर्थ्यादिति चेत् । न, सूत्रकारेणाऽपर्युदस्तत्वादिति भावः ।

## ४—प्रश्नोत्तराणि

उ०—अद्विषन—अप्रीतावित्यर्थकात् "द्विष्" धातो र्लङि—बहुवचनविवक्षायां झि प्रत्यये "तिङ्शित्सार्वधातुकम्"इत्यनेन सार्वधातुकसंज्ञायाम् "कर्त्तरि शप्"इत्यनेन शपि "अदिप्रभृतिभ्यः शपः"इत्यनेन शपो लुकि "लुङ्लङ्लृङ्क्ष्वडुदात्तः"इत्यनेनाडागमे "द्विषश्च"इत्यनेन विकल्पेन लङो झेर्जुसि अनुबन्धलोपे सकारस्य रुत्वे विसर्गे च "अद्विषुः" इति सिद्ध्यति । तदभावे—"झोन्तः" इत्यनेन अन्तादेशे तकारस्य संयोगान्तलोपे "अद्विषन्" इति सिद्धति ।

अध्यगीष्ट—१८ पृष्ठे द्रष्टव्यम् ।

सुषुषुपतुः—९ पृष्ठे द्रष्टव्यम् ।

अजागरीत्—६८ पृष्ठे द्रष्टव्यम् ।

## ५—प्रश्नोत्तराणि

उ०—वृद्धावित्यर्थकात् ओकारेकारेत्संज्ञक प्यायधातो र्लुङि प्रथमपुरुषैकवचने 'अप्यायि' 'अप्यायिष्ट' इति रूपद्वयम् ।

अप्यायि–प्यायधातो र्लुङि आत्मनेपदे त प्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि"इत्यनेन च्लौ "दीपजनबुधपूरितायिप्यायि-

भ्योऽन्यतरस्याम्" इत्यनेन विकल्पेन चिणि अनुबन्धलोपे "चिणो लुक्" इत्यनेन चिणः परस्य त शब्दस्य लोपे अप्यायि इति सिद्ध्यति । तदभावे "च्लेः सिच" इत्यनेन सिचि इचाविती अप्यायि स त इति जाते षत्वे ष्टुत्वे च कृते 'अप्यायिष्ट' इति रूपं सिद्ध्यति ।

संवरणार्थक ऊकारेत्संज्ञक गुहधातो लुङि प्रथमपुरुषैकवचने अगूहीत्, अघुक्षत्, अगूढ, अघुक्षत् ।

अगूहीत्—गुह्धातोर्लुङि परस्मैपदे प्रथमपुरुषैकवचने तिप् प्रत्यये अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिजागमे इचाविती "स्वरतिसूतिसूयति धूञूदितो वा" इत्यनेन विकल्पेनेडागमे "अस्तिसिचोऽपृक्ते" इत्यनेन च ईडागमेऽनुबन्धलोपे—"इट ईटि" इत्यनेन सलोपे "ऊदुपधाया गोहः" इत्यनेन ऊकारे अगूहीत् इति सिद्ध्यति । इडभावे च्लेः क्सादेशे भष्भावे "षढोः कः सि" इत्यनेन ककारे सस्य षत्वे संयोगे च अघुक्षत् इति सिद्ध्यति ।

अगूढ—गुह्धातो लुङि आत्मनेपदे प्रथमपुरुषैकवचने तप्रत्यये अडागमे च्लौ तस्य क्सादेशे—"लुग्वादुहदिहलिहगुहामात्मनेपदेदन्त्ये" इत्यनेन विकल्पेन क्सस्य लोपे "हो ढः" इत्यनेन हस्य ढत्वे "झषस्तथोर्धोऽधः" इत्यनेन तकारस्य धकारे ष्टुत्वे ढलोपे दीर्घे च कृते अगूढ इति सिद्ध्यति । क्सस्यलोपाभावे तु अघुक्षत इति सिद्ध्यति ।

धेट्पाने इत्यस्माद्धातो लुङि प्रथमपुरुषैकवचने 'अदधत्' 'अधात्' 'अधासीत्' इति रूपत्रयं सिद्ध्यति ।

अदधत्—पानार्थकधेट्धातोर्लुङि तिपि अडागमेऽनुबन्धलोपे "आदेच उपदेशेऽशिति" इत्यनेनात्वे "च्लि लुङि" इति च्लौ "विभाषा धेट्श्व्योः" इत्यनेन विकल्पेन च्लेश्चङि "चङि" इत्यनेन द्वित्वे आतो लोपे "अदधत्" इति सिद्ध्यति । चङभावे च्लेः सिजादेशे "विभाषाघ्राधेट्शाच्छासः" इत्यनेन सिचो विकल्पेन लुपि अधात् इति सिद्ध्यति । लुगभावे—"यमरमनमातां सक् च" इत्यनेन सकि सिच इटि अधासीत् इति रूपं सिद्ध्यति ।

आच्छादनार्थकऊर्णुञ्धातो लुङि प्रथमपुरुषैकवचने और्णुवीत, और्णावीत्, और्णवीत्, इति रूपत्रयं सिद्ध्यति ।

औणुंवीत्—ऊर्णुधातोर्लुङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे प्राप्ते "आडजादीनाम्" इत्यनेन आडागमे "आटश्च" इत्यनेन वृद्धौ "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे इचावितौ "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे पुनः "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमेऽनुबन्धलोपे च कृते "विभाषोर्णोः" इत्यनेन इडादिप्रत्ययस्य विकल्पेन ङित्सञ्ज्ञायां "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेन उवङि "इट ईटि" इत्यनेन सलोपे औणुंवीत् इति सिद्धयति ।

एवम् "ऊर्णोतेर्विभाषा" इत्यनेन विकल्पेन वृद्धौ अवादेशे च कृते और्णावीत्, इति सिद्धयति। तदभावे गुणेऽवादेशे च कृते और्णवीत्, इति सिद्धयति ।

## ६—प्रश्नोत्तराणि

उ०—"अनुदात्तङित आत्मनेपदम्" अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यादिति तदर्थः। नन्विहानुवृत्तेराभावादुभयमपि दुर्लभम् । "भूवादयो धातवः" इति सूत्रान्मण्डूकप्लुत्याऽनुवृत्तस्य धातव इत्यस्य विभक्तिविपरिणामात् कथञ्चिद्धातोरिति पदे लब्धेऽपि तस्य इत्येतन्नलभ्यत इति चेत् । अत्राहुः "इको झल्" इत्यत्र सना धातुरिवेहात्मनेपदेन लकारधात्वोराक्षेपो बोध्यः तिङां लादेशत्वाल्लस्य च धातोर्विधानादिति दिक् ।

'भुवो वुग्लुङ्लिटोः' अत्र 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति सूत्रादचीत्यनुवर्तते तदाह—"भुवो वुगागमः स्याल्लुङ्लिटोरचि" इति तदर्थः तत्र शंकते अचीति किम् अभूत्, अभूः इत्यत्र वुगि सति 'लोपो व्योर्वलि' इति लोपं बाधित्वा परत्वाद्धल्ङ्यादिलोपः स्यात् । सन्निपातपरिभाषायास्तु नैतद्विषये प्रवृत्तिः, अबिभः इत्याद्यसिद्धयापत्तेः ।

ननु हल्ङ्यादिलोपादन्तरङ्गत्वात् "लोपो व्योर्वलि" इति लोप एव भविष्यति । तथा च मव्यतेर्यङ्लुगन्ताल्लङि तिप्सिपोः अमामव् अमाम इत्यत्र व्योर्लोप एव माधवादिभिः स्वीकृतः एवञ्चाज्ग्रहणम् "ऊदुपधायाः" इत्युत्तरार्थमनुवर्त्तमानमिहाप्युपरञ्जकतया वृत्तिकारादिभिर्योजितं नत्वावश्यकतयेत्येव निष्कर्ष उचित इति चेत् अत्राहुः—

"भुवो वुक्" इत्यस्याङ्गत्वाद्बह्वपेक्षत्वेन हल्ङ्यादिलोपस्येव वुकोऽपि बहिरङ्गतया असिद्धत्वे सति वलिलोपस्य प्राप्तेरेवाभावादज्ग्रहणमिहार्थमपीत्येव युक्तमिति

अयं च शंकाग्रन्थः—समाधानग्रन्थश्च मनोरमायां स्थितः । अत्र नव्याः—मव्यतेर्यङ्लुगन्त एव नास्ति, अमामदित्यादि रूपं तु दूरादपास्तमेव । यकारवकारान्तानामूठ्भाविनां यङ्लुग्नास्तीति "च्छ्वोः शूडनुनासिके च" इति सूत्रे भाष्ये ध्वनितम् । कैयटेन च स्पष्टीकृतम् इदं च च्छ्वोरिति यत्रोठ्तद्विषयकम् "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्यूठ्भाविनो स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यं माधवादिसम्मतञ्च । 'मव्यबन्धने' अयं यान्त ऊठ्भावीति मूले वक्ष्यमाणत्वात् । तथा च तद्ग्रन्थेन सहात्रत्यमनोरमाग्रन्थो विरुध्यत इत्याहुः । यदि तु भवते यङ्लुगन्तादिति मनोरमायां पठ्येत्, तदा तत्र पूर्वापरग्रन्थविरोधो नास्तीति दिक् ।

---

१९३६

३ वर्षे १ पत्रम् ।

# १—प्रश्नोत्तराणि

१—पारीणः, पूर्वेषुकामशमः, वासिष्ठिकः, सौवर्णः, आनुलोमिकः, आस्तिकः, सौत्यम् ।
एतेषां प्रयोगाणां सूत्रविग्रहादिप्रदर्शनेन साधनं विधीयताम् ।

२—शङ्कव्यम्, सार्वभौमः, माहानाम्निकः, व्याकरणसमापनीयम्, स्तैन्यम्, अवटीटम्, वारवन्तीयम्, इन्द्रियम्, वाचालः, कुत्र ।
एतेषु प्रयोगेषु प्रकृतिप्रत्ययौ तदर्थाश्च सप्रमाणं निर्देशनीयाः ।

३—पुरः, उच्चैस्तमाम्, अद्धकि, दौद्रकी, बहुधा, विप्रत्राकरोति, प्रियाप्रियेण । एतेषु प्रयोगेषु कार्य्यविशेषान् यथाशास्त्रं प्रदर्शयेषु प्रयोगेषु प्रयोगत्रयमादाय वाक्यत्रयं यदृच्छया विरचनीयम् ।

४—(क) अव्ययानां भमात्रे टिलोपस्यानित्यतायां किं फलं किञ्च तत्र प्रमाणम् ।

(ख) "असमासे निष्कादिभ्यः" इति सूत्रेऽसमासग्रहणस्य वैयर्थ्यं कथमाशङ्कनीयम् ? सार्थक्यं च कथं सम्पादनीयम् ?

( ग ) "संख्यायाः संवत्सरसंख्यस्य च" इति सूत्रे संवत्सरग्रहणे

ऽयर्थता कथमापतिता ? कथं च सा समाधेया सर्वमेतन्निरूप्यताम् ।

"जनपदतदवध्योश्च" । "क्रीतवत् परिमाणात्" "विभाषा हविरपूपादिभ्यः" । "संख्यायाः गुणस्य निमाने मयट्" । "अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयाः" । एतेषु सूत्रत्रयस्य स्वेच्छया सोदाहरणा व्याख्या विधीयताम् ।

## १—प्रश्नोत्तराणि

उ०—पारीणः—पारे जात इति विग्रहे "अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्" इति वार्तिकेन खप्रत्यये खस्येनादेशे नस्य णत्वे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते पारीणः इति साधु ।

पूर्वैषुकामशमः—"दिक्पूर्वपदादसंज्ञायां ञः" इति सूत्रे "असंज्ञायाम्" इति सौत्रत्वात् पञ्चम्यर्थे सप्तमीत्याशयेनाह असंज्ञायां किम्—संज्ञाभूतायाः प्रकृतेर्माभूत पूर्वेषुकामशम्यां भव इति विग्रहे—"तत्र भवः" इत्यनेन अणि "प्राचां ग्रामनगराणाम्" इत्युत्तरपदवृद्धौ पूर्वैषुकामशमः इति सिद्ध्यति ।

वासिष्ठकः—वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वेत्यर्थे "अध्यायेष्वेवर्षेः" इति सूत्रेण वसिष्ठशब्दात् ठञ् प्रत्यये ऽनुबन्धलोपे ठस्येकादेशे ञित्वात् "तद्धितेष्वचामादेः" इत्यनेनादिवृद्धौ भसंज्ञायाम् "यस्येति च" इत्यनेनाकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च वासिष्ठिकः इति सिद्ध्यति ।

सौवर्णः—"जातरूपेभ्यः परिमाणे" इति सूत्रे बहुवचनग्रहणात्पर्यायाणामपि ग्रहणम् । तेन हाटकः तापनीयः सौवर्णं इत्यत्र वृद्धलक्षणो मयट्प्राप्तः तपनीयादेः "अनुदात्तादेश्च" इत्यनेन अञि प्राप्ते पूर्वोक्तसूत्रेणारम्भ प्रत्ययेऽनुबन्धलोपे णित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च सौवर्णो वा निष्कः इति सिद्ध्यति ।

आनुलोमिकः—अनुलोमं वर्तत इति विग्रहेऽनुलोमशब्दात् "तत्प्रत्यनुपूर्वमीपलोमकूलम्" इति सूत्रेण ठक्प्रत्यये ठस्येकादेशे कित्वात् "किति च" इत्यनेन आदिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च आनुलोमिकः इति सिद्ध्यति ।

आस्तिकः—अस्ति परलोक इत्येवं मतिर्यस्य सेति विग्रहे अस्तिशब्दात्

"अस्ति नास्ति दिष्टं मतिः" इति सूत्रेण ठक्प्रत्ययेऽनुबन्धलोपे ठस्येकादेशे किस्वादादिवृद्धौ प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च आस्तिकः इति सिद्ध्यति ।

सीत्यम्—सीतया समितमिति विग्रहे सीताशब्दात् "नौवयोधर्मविष- मूलमूलसीतातुलाभ्यस्तार्यंतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु" इतिसूत्रेण यत् प्रत्यये अनुबन्धलोपे भसंज्ञायाम् "यस्येति च" इत्याकार- लोपे प्रातिपदिकत्वात्सौ सोरमादेशे सीत्यम् इति सिद्ध्यति ।

## २—प्रश्नोत्तराणि

उ०—शङ्कव्यम्—९५ पृष्ठे द्रष्टव्यम् ।

सार्वभौमः—सर्वभूमे र्निमित्तं संयोग उत्पातो वेति विग्रहे "सर्वभूमि- पृथिवीभ्यामणञौ"इत्यनेन अण्प्रत्ययेऽनुबन्धलोपे णित्वादादिवृद्धौ सर्वभूमेरी- श्वरः इत्यर्थे वा।"तस्येश्वरः" इत्यनेनाणि सर्वभूमौ विदित इत्यर्थे "तत्र वि- दितः" इति चेत्यणि "अनुशतकादीनां च" इत्युभयपदवृद्धौ भसंज्ञायाम् "य- स्येति च" इत्यनेन इकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च सार्वभौमः इति सिद्ध्यति ।

माहानाम्निकः—महानाम्न्यो "विदामघवन" इत्याद्या ऋचः तासां ब्रह्मच- र्यमस्येतिविग्रहे महानाम्नीशब्दात् "महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम्" इति वार्तिकेन ठञि ठस्येकादेशे ञित्वादादिवृद्धौ भसंज्ञायाम् "यस्येति च" इत्य- नेन ईकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च माहानाम्निकः इति सिद्ध्यति अत्र ऋग्विशेषेषु रूढस्य महानाम्नीशब्दस्य नित्यस्त्रीलिङ्गत्वात् "भस्याढे तद्धिते" इति पुंवत्वं न प्रवर्तते ।

व्याकरणसमापनीयम्—व्याकरणसमापनं प्रयोजनमस्येति विग्रहे "समा- पनात्सपूर्वपदात्" इति सूत्रेण छप्रत्यये छस्येयादेशे तद्धितान्तत्वात्प्रातिपदिक- संज्ञायां प्रातिपदिकत्वात्सौ "अतोऽम्" इत्यनेन सोरमादेशे व्याकरणसमाप- नीयम् इति सिध्यति ।

स्तैन्यम—स्तेनस्य भावः कर्म वेति विग्रहे "स्तेनाद्यन्नलोपश्च" इति सूत्रेण स्तेन चौर्ये पचाद्यच् स्तेनशब्दात् यत्प्रत्यये नलोपेऽनुबन्धलोपे प्रातिपदिक- त्वात्सौ सोरमादेशे स्तेयमिति । सिद्ध्यति । नलोपे नेतिसंघातग्रहणवाच्यम् ।

अन्यथा—वर्णग्रहणे तु "यस्येति च" इत्यकारलोपे सतीष्टं न सिद्ध्यति । "अचः परस्मिन् पूर्वविधौ" इत्यल्लोपस्थानिवद्भावादयादेशो प्रसंगादिति भावः । ननु संघातग्रहणेपि "अलोऽन्त्यस्य" इत्यकारस्यैवलोपः स्यात्तु संघातग्रहस्येति चेत् । मैवम् । आरम्भसामर्थ्यात् "नानर्थकेऽलोऽन्त्यविधिः" इति निषेधाद्वा तत्सिद्धेः । अत्र स्तेनादिति योगं विभज्य "गुणवचनब्राह्मणादिभ्यः" इति सूत्रेण ष्यञन्तमपि "स्तैन्यमिति" केचिदिच्छन्ति ।

अवटीटम्—नासिकाया नतमिति विग्रहे–नासिकासाधनके नमने वर्तमाना-दवशब्दात् स्वार्थे "नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः" इत्यनेन टीटच्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे अवटीटम् इति सिद्ध्यति तद्योगान्नासिका अवटीटा पुरुषो प्यवटीटः ।

वारवन्तीयम्—वारवन्तशब्दोऽस्मिन्नस्ति इति विग्रहे मत्वर्थे छप्रत्यये छस्येयादेशे प्रातिपदिकत्वात्सौ सोरमादेशे वारवन्तीयम् साम इति सिद्ध्यति ।

इन्द्रियम्—१४ पृष्ठे द्रष्टव्यम् ।

वाचालः—कुत्सित बहुभाषते इति विग्रहे "आलजाटचौ बहुभाषिणि" इति सूत्रेण "कुत्सित इति वक्तव्यम्" इति वार्तिकेन च कुत्सितेऽर्थे आलज् प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च वाचालः इति सिद्ध्यति ।

कुत्र—कस्मिन्निति विग्रहे किम् शब्दात् "सप्तम्यास्त्रल्" इत्यनेन त्रल्प्रत्यये अनुबन्धलोपे "कु तिहोः" इत्यनेन किमः कु इत्यादेशे प्रातिपदिकत्वात्सौ अव्ययत्वादस्य "अव्ययादाप्सुपः" इत्यनेन सोर्लोप कुत्र इति सिद्ध्यति ।

## ३—प्रश्नोत्तराणि

उ०—पुरः—३६ पृष्ठे द्रष्टव्यम् ।

उच्चैस्तमाम्—अतिशयेन उच्चैरिति विग्रहे-"अतिशायनेतमबिष्ठनौ" इत्यनेन तमप्प्रत्यये "तरप्तमपौ घः" इत्यनेन घसंज्ञायाम् "किमेत्तिङव्यय-घादाम्वद्रव्यप्रकर्षे" इत्यनेन आमुप्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोर्लोपे उच्चैस्तमाम् इति सिद्ध्यति ।

अद्धकि—अद्धि इति विग्रहे "नीतौ च तद्युक्तात्" इति सूत्रेण अनुकम्पायुक्तादित्यर्थे कप्रत्यये प्रातिपदिकत्वात्सौ सोर्लोपे अद्धकि इति सिद्ध्यति ।

"यद्यपि पुत्रादिरेव साक्षादनुकम्पायुक्तो ननु धानादिः तथापि तद्द्वारा धानादीनामप्यस्त्यनुकम्पासम्बन्ध इति भावः ।

क्षौद्रकी—क्षुद्रको नाम कश्चिदायुधजीविना वाहीकदेशवासिना सङ्घः । स एव क्षौद्रका इत्यत्र, "आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात्" इत्यनेन स्वार्थे ञ्यट् प्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते क्षौद्रक्यः इति सिद्धयति । स्त्रियां तु टित्वान्ङीपि क्षौद्रकी इति सिद्धयति ।

बहुधा—इत्यत्र अविप्रकृष्टकालिकक्रियाजन्मगणनत्तेर्बहुशब्दात् "विभाषा बहोर्धाऽविप्रकृष्टकाले" इत्यनेन विकल्पेन धाप्रत्यये प्रातिपदिकत्वात्सौ सोर्लोपे बहुधा इति सिद्धयति तदभावे कृत्वसुचि बहुकृत्वो वा दिवसस्य भुङ्क्ते इति सिद्धयति ।

विप्रत्राकरोति—विप्राधीनं देयं करोतीति विग्रहे "देये त्रा च" इत्यनेन त्राप्रत्यये सातिश्चप्रत्यये कृते प्रातिपदिकत्वात्सौ सोर्लोपे विप्रत्राकरोति इति सिद्धयति । पक्षे विप्रसात्करोतीति । सिद्धयति ।

प्रियप्रियेण ददाति—इत्यत्र "अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्" इत्यनेन प्रियशब्दस्य विकल्पेन द्वित्वे प्रातिपदिकसञ्ज्ञायां टाविभक्तौ "टाङसिङसामिनात्स्याः" इत्यनेन इनादेशे णत्वे च कृते प्रियप्रियेण ददाति इति सिद्धयति । इह द्विर्वचने कर्मधारयवद्भावात्सुपलुकि तदेव वचनम् । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः ।

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥

धन्यो नरोऽयं किलभाति लोके, ब्रह्मपरिज्ञायप्रियप्रियेण ददाति । प्रशंसनीयं धनं तस्य, यः स्वीयं धनं विप्रत्राकरोति । इति ।

## ४—प्रश्नोत्तराणि

उ०—(क) "अव्ययानां भमात्रे टिलोपः" इति । वार्तिकम् कात्स्न्र्ये मात्रशब्दः । कृत्स्नस्य भस्याव्ययस्य टेर्लोपः । "नस्तद्धिते । इत्याद्युपाधिर्नापेक्षित इति तदर्थः ।

नन्वेवं सति आरादित्यव्ययात् छस्य ईयादेशे टिलोपे आरीय इति स्यादित्यत

आह—"अनित्योऽयम् अव्ययानां भमात्रे टिलोपः" इति । तत्र प्रमाणम्—बाह्यः इत्यत्र बहिषष्टिलोपविधानात् । तेनेह न—आरातीयः" इति ।

(ख) "असमासे निष्कादिभ्यः" इति आर्हादित्येतत्—"तेन क्रीतम्" इति यावत्सप्तदशसूत्र्यामनुवर्त्तते । निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु तेन निष्केण क्रीतमिति विग्रहेऽनेन सूत्रेण ठकि नैष्किकमिति सिद्ध्यति । समासे तु ठञेव—परमनैष्किकम् इति । परमनिष्केण क्रीत इत्यर्थः । समासत्वाट्ठगभावे औत्सर्गिकष्ठञ् । स्वरे विशेषः । ननु निष्कादिभ्य एव ठको विधानात्तदन्तात् समासाट्ठकोऽप्रसक्तेरसमासग्रहणं व्यर्थम् । न च प्रातिपदिकग्रहणस्यापञ्चमाध्यायसमाप्तेरविकृतत्वात्प्रातिपदिकविशेषणतया तदन्तविधौ समासादपि ठकः प्रसक्तिरस्तीति वाच्यम्, "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" इति निषेधात्, निष्कादीनां च विशिष्य गृहीतत्वेन ग्रहणवत्वादित्यत आह—असमासग्रहणं ज्ञापकं भवति "इतः प्राक् तदन्तविधिः" इति ।

तेन सुगव्यमित्यत्र शोभना गौः सुगौः "न पूजनात्" इति निषेधात् "गोरतद्धितलुकि" इति न टच् । "उगवादिभ्यो यत्" इति गोशब्दान्ताद्यत् ।

यवापूप्यमिति—"विभाषा हविरपूपादिभ्यः" इत्यपूपान्तत्वाद्यत् । नन्वसमासग्रहणात् ज्ञापकात् इत ऊर्ध्वमपि तदन्तविधिः किं न स्यात् । ततश्च—परमपारायणं वर्तयतीत्यत्रापि "पारायणतुरायणचान्द्रायणं वर्तयति" इति ठञ् स्यादित्यत आह—'इत ऊर्ध्वं तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि' । इदमपि वार्तिकमेव । इत ऊर्ध्वं संख्यापूर्वपदानां तदन्तग्रहणमिति यदुक्तम्, तत्तद्धितलुकि सति न भवतीत्यर्थः ।

(ग) "संख्यायाः संवत्सरसंख्यस्य च" इति । संख्यायाः परस्य संवत्सरसङ्ख्यस्योत्तरपदस्य वृद्धिः स्यात् ञिदादाविति तदर्थः ।

नन्वत्र संवत्सरग्रहणं व्यर्थम्, संवत्सरस्य द्वादशमासपरिमाणतया "परिमाणान्तस्यासञ्ज्ञाशाणयोः" इत्येव सिद्धेरित्यत आह—परिमाणान्तस्येत्येवसिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थमिति । तेन—द्वैसमिक इत्युत्तरपदवृद्धिर्न ।

"जनपदतदवध्योश्च" जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद्वुञ् स्यादिति तदर्थः । आदर्शक इति । आदर्शो नाम जनपदः । तत्र भव इत्यर्थे—

पूर्वोक्तसूत्रेण वुञि "युवोरनाकौ" इत्यनेन वोरकादेशे आद्रशक इति सिद्धयति।

त्रिगर्तोनाम जनपदविशेषस्तस्यावधिः। जनपदत्वेन सिद्धावपि त्रिगर्तशब्दे परमपि गर्तोत्तरपदाच्छं बाधितुमिह तदवधिग्रहणम्। तदाह—त्रगर्तक इति।

"विभाषा हविरपूपादिभ्यः" हविर्विशेषवाचिभ्यः अपूपादिभ्यश्च प्राक् क्रीतीयेष्वर्थेषु यद्वा स्यादित्यर्थः। पक्षे छः।

"आमिक्षायै हितमिति विग्रहे पूर्वोक्तसूत्रेण यत्प्रत्यये आमिक्ष्यं दधि इति सिद्धयति। पक्षे छप्रत्यये छस्येयादेशे आमिक्षीयम् इति सिद्धयति। 'तप्ते पयसि दध्नि निक्षिप्ते सति यत् घनीभूतं निष्पद्यते सा आमिक्षेत्युच्यते। एवम् पुरोडाश्याः, तण्डुलाः पुरोडाशीयाः, अपूप्यम्, अपूपीयम्।

"संख्यायाः गुणस्य निमाने मयट्" तदस्येत्यनुवर्तते गुणः भागः अंशः। निमीयते क्रीयतेऽनेनेति निमानं मूल्यद्रव्यम्। मेङ्प्रणिदाने इत्यतः करणे ल्युट्। तदाह भागस्य मूल्ये वर्तमानात्प्रथमान्तात्संख्यावाचिनः षष्ठयर्थे मयट् स्यादिति तदर्थः। षष्ठयर्थे। अस्येत्यर्थे इत्यर्थः। यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्येति विग्रहे पूर्वोक्तसूत्रेण मयटि द्विमयमुदश्विद्यवानाम्। 'द्वाभ्यां यवप्रस्थाभ्याम् एक उदश्वित्प्रस्थः क्रीयते यत्र तत्रेदं वाक्यं प्रयुज्यते द्विमयमुदश्विद्यवानामित्युदाहरणम्।

---

१९३६

३ वर्षे २ पत्रम्।

१—अभूव, पेधिढ्वम्, माङ्क्ष्व, तिप्सीष्ट, अघाक्षि। सूत्रोपन्यासपुरस्सरमेतानि रूपाणि साधु साधयत।

२—आष्टाम्, अपप्तत्, खायात्, अगे, ऊवे। विशेषकार्योपन्यासमुखेनैते प्रयोगाः साधनीयाः।

३—(क) क्रादीनां चतुर्णां ग्रहणं नियमार्थम्।

(ख) संज्ञायाः कार्यकालत्वादित्यादि।

अनयोः काचनान्यतरा फक्किका सशङ्कासमाधानं व्याख्येया।

४—ऐड्ढ्वम्, सुवै, और्णोः, अव्ययौ, शाधि एतेषां सिद्धिप्रकारो लेख्यः।

५—( क ) 'स्फायन्निर्मोकसन्धीति, ( ख ) पर्यवलितं नियमयन्' ( ग ) रजो विश्रामयन् राज्ञाम् , ( घ ) सखीतयो राघवयोरध्यीयन् , ( ङ ) 'न विश्वसेदविश्वस्तम्' । एतेषु वाक्येषु त्रिरोधप्रदर्शनपुरस्सरमधोरेखाङ्कितपदानां सिद्धिः कर्त्तव्याः ।

## १—प्रश्नोत्तराणि

उ०—अभूत्—भूधातोर्लुङ्लकारे परस्मैपदे तिपि अनुबन्धलोपे "इतश्च" इत्यनेन इकारलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिचि इचाविती "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इत्यनेन सिचो लुकि "अभूत्" इति स्थिते पित्त्वाङ्ङित्त्वाभावे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे प्राप्ते "भूसुवोस्तिङि" इत्यनेन तन्निषेधे अभूत् इति सिद्ध्यति ।

अत्र "अस्तिसिचोऽपृक्ते" इत्यनेन ईट् तु न भवति "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इत्यनेन सिचो लुप्तत्वात् । भाष्यकृता प्रत्याख्यातेन "आहिभुवोरीट् प्रतिषेधः" इति वार्तिकेनात्राऽत्रेटं वारयन्तो वेदाङ्गप्रकाशकर्त्तारो भाष्यमर्माऽनभिज्ञा एव, भाष्यस्थानिवद्भावदूषणप्रकरणेऽस्य वार्तिकस्य पाठादादिकेऽस्त्यादेशभूतावेव स्थानिवद्भावेनास्तित्वात्प्राप्तस्येटो वारणायैव तद्वार्तिकवचनात् । सिज्निमित्तकवारणाय तदारम्भे तु "अगात् , अपात्" इत्यादावीटो दुर्वारत्वापत्तेर्भाष्योक्तस्य विद्यमानादित्यर्थकसकारान्तादिति सिचो विशेषणस्यैवावश्यमङ्गीकारः करणीयः आत्थ इत्यत्र दीक्षितोक्तेरेव स्वयमप्यङ्गीकृतत्वाद् अभूत् इत्यत्र दीक्षितोपन्यस्तभाष्योक्तप्रत्याख्यानरीत्यनङ्गीकारः आत्थ इत्यत्र दीक्षितोपन्यस्तभाष्योक्तप्रत्याख्यानरीत्यङ्गीकार इत्यर्धजारतीयत्वाद्धेयैव वेदाङ्गप्रकाशरीतिरिति दिक् ।

एधिढ्ढ्वम्—८९ पृष्ठे द्रष्टव्यम् ।

आञ्छ—६५ पृष्ठे द्रष्टव्यम् ।

तित्सीष्ट—२७ पृष्ठे द्रष्टव्यम् ।

अग्राक्षि—विलोडनार्थक ऊकारेत्सञ्ज्ञक गाहूधातोर्लुङि तस्थाने इटि च कृते "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ

"ढ्लोः सिच्" इत्यनेन क्षिचि इचावितौ ऊदित्वादिड्भावपक्षे "हो ढः" इत्यनेन हस्य ढत्वे "षढोः कः सि" इत्यनेन ककारे कात्परस्य सकारस्य च "आदेशः प्रत्यययोः" इत्यनेन षत्वे "एकाशो बशो भष् झषन्तस्य स्ध्वोः" इत्यनेन भष्भावे च कृते कषसंयोगे क्षत्वे 'अघाक्षि' इति सिद्ध्यति ।

## २—प्रश्नोत्तराणि

उ०—आष्टाम्—व्याप्त्यर्थकात् ऊकारेत्संज्ञक अक्ष्धातोर्लुङि तस्प्रत्यये "तस्थस्थमिपां तान्तन्तामः" इत्यनेन तसित्यस्य तामादेशे "लुङ्लङ्लृङ्क्ष्व-डुदात्तः" इत्यनेनाटि प्राप्ते "आडजादीनाम्" इत्यनेन आडागमे "आटश्च" इत्यनेन वृद्धौ च्लौ सिचि सिचो लोपे "स्कोः संयोगाद्योरन्ते च" इत्यनेन योगादिलोपे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे "आष्टाम्" इति सिद्ध्यति ।

अपप्तत्—पतनार्थक् लृकारेत्संज्ञक पत्धातोर्लुङ्स्तिपि अनुबन्धलोपे "इतश्च" इतीकारलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमेऽनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ लृदित्वात् "पुषादिद्युताद्यॢदितः परस्मैपदेषु" इत्यनेन च्लेरङि अपत् अत् इति स्थिते "पतः पुम्" इत्यनेन पुमागमे उमावितौ मित्वात् "मिदचोऽन्त्यात्परः" इत्यनेन अन्त्यादचः परे सति अपप्तत् इति सिद्ध्यति ।

खायात्—अवदारणार्थक उकारेत्संज्ञक खन् धातोराशिर्लिङि तिपि अनुबन्ध-लोपे "इतश्च" इतीकारलोपे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुटि उटावितौ "लिङः सलोपोऽनन्त्यस्य" इत्यनेन सकारस्यलोपे "ये विभाषा" इत्यनेन विकल्पेन नकारस्य आत्वे खायात् इति सिद्ध्यति । तदभावे—खन्यात् इति सिद्ध्यति ।

अगे—गत्यर्थकात् गाङ् इत्यस्माद्धातोः लङ्लकारे आत्मनेपदे इटि सार्व-धातुकसंज्ञायां शपि च कृतेऽनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमेऽनुबन्धलोपे सवर्णदीर्घे गुणे च कृते अगे इति सिद्ध्यति ।

ऊवे—शब्दार्थक उङ् इत्यस्माद्धातोरात्मनेपदे लिटि तप्रत्यये तस्य "लिट-स्तझयोरेशिरेच्" इत्यनेनैश्त्वे "वर्णादाङ्गं बलीय इतिपरिभाषया" द्वित्वात् पूर्वम् "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेन उवङि ङकारस्येत्संज्ञायाम् ततो द्वित्वे "हलादिः शेषः" इति लोपे "ह्रस्वः" इति अभ्यासस्य ह्रस्वे । "अकः सवर्णे दीर्घः" इत्यनेन सवर्णदीर्घे ऊवे इति सिद्ध्यति ।

## ३—प्रश्नोत्तराणि

क्रादीनां चतुर्णां ग्रहणं नियमार्थमिति—

उ०—ननु "कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" इति सूत्रे कृसृभृइत्येषां प्रकृत्याश्रयस्य "एकाच उपदेशेऽनुदात्तात्" इति निषेधस्य प्राप्तत्वात् वृङ्वृञोस्तु उदात्तत्वेन "श्र्युकः किति" इति प्रत्ययाश्रयस्य निषेधस्य प्राप्तत्वाच्च तेषामिह ग्रहणं व्यर्थम्। भारद्वाजनियमप्रापितेण्निषेधाय तु स्तुद्रुवादीनां सार्थक्यमित्याह क्रादीनां चतुर्णां ग्रहणं नियमार्थमिति। 'प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्यः एव नान्येभ्य' इति। 'ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम्'। प्रकृत्याश्रयत्वनाम 'अव्यवहितोत्तरत्वसम्बन्धानवच्छिन्नधातुत्वावच्छिन्नप्रकारतानिरुपितविशेष्यताप्रयोजकप्रत्ययघटितशास्त्रत्वम्'। यावानिति नञ् वा शब्दान्यतरप्रापित इत्यर्थः। तेन षिध् इत्यस्य "सिषेधिथे" इत्येकमेव। यत्तु—"अनन्तरस्य विधिर्वा भवति प्रतिषेधोवा" इति न्यायेन प्रक्रमाद्वा नञ्प्रापितस्यैव नियमस्तेनोक्तधातोरुभयमिति तन्न। "उपदेशेऽत्वतः" इति सूत्रे नित्यानिट् इत्यस्याजिर्व्योवर्त्यंइत्यर्थपरभाष्यासङ्गतिः। यदि च वा प्राप्तनियमो न स्यात्तदा तत्राऽप्यूदित्वप्रयुक्तविकल्पस्य सद्भावात्तदसङ्गतिः। मम तु क्रादिनियमेन नित्य इडिति भावः। नान्येभ्य इति। तेन बभूविथ इत्यादेः सिद्धिः। नियमाकारे प्रकृत्याश्रयः प्रत्ययाश्रयः इत्युक्तन्तत्र विचार्यते। अस्तुनाम प्रकृत्याश्रयनिषेधस्य नियमः। वृग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वेन प्रत्ययाश्रयस्य नियमासम्भवात्। थलोऽकित्त्वेन न तत्र प्रत्ययाश्रयनिषेधप्राप्तिः। वृञ उदात्तत्वेन नापि प्रकृत्याश्रयनिषेधप्राप्तिः। नचैवमपि वृङो नियमार्थत्वमस्त्विति वाच्यम्। तस्य विशेषरूपेणाऽत्राग्रहणात्। यद्यपि विशेषरूपेण तत्र वृञोऽपि न ग्रहणं तथाप्यप्राप्तनिषेधप्राप्तिफलकत्वेन वृञ एव ग्रहणम्। एवञ्च—"श्र्युकः किति" इति निषेधो दुर्वार एवेति चेदुच्यते "बभूथाततन्थजगृम्भववर्थेतिनिगमे" इति सूत्रे छन्दसि ववर्थेति निपातनेन भाषायां वृञस्थल इटः स्वीकर्त्तव्यत्वाद्वृग्रहणस्य थलविषयत्वाऽयोगेन वमादीनां च कित्वेन नियमस्य सुस्थत्वादिति शम्।

## ४—प्रश्नोत्तराणि

उ०—पेड्ढ्वम्—५८. पृष्ठे द्रष्टव्यम्।

सुवै—सूधातोर्लोट्लकारे आत्मनेपदे उत्तमपुरुषस्यैकवचने इटि सू इट् इति स्थिते टेरेत्वे "आडुत्तमस्य पिच्च" इत्यादि "आटश्च" इत्यनेन वृद्धौ आटः पित्वात् "सार्वधातुकार्धधातुकयोः" इति प्राप्तस्य गुणस्य "भूसुवोस्तिङि" इति निषेधे उवङादेशे च कृते 'सुवै' इति सिद्ध्यति ।

और्णोः—आच्छादनार्थक नकारेत्संज्ञक ऊर्णु धातोर्लङि सिपि अनुबन्धलोपे "इतश्च" इत्यनेन इकारस्येत्संज्ञायाम्" लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे प्राप्ते "आडजादीनाम्" इत्यनेन आडागमे "आटश्च" इत्यनेन वृद्धौ "गुणोऽपृक्ते" इत्यनेन उकारस्य गुणे सकारस्य रुत्वे विसर्गे च कृते 'और्णोः' इति सिद्ध्यति ।

अध्यै—९२ पृष्ठे द्रष्टव्यम् ।

शाधि—६९ पृष्ठे द्रष्टव्यम् ।

## ८—प्रश्नोत्तराणि

( क ) उ०—स्फायनिर्मोकसन्धीति—चक्षिङ् व्यक्तायां वाचि । गूढार्थस्य स्पष्टप्रतिपत्त्यर्थं विवरणे इत्यर्थः ।

श्रुतौ—"पूर्वापरं चरतो माययैतौ । शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनाभि चष्टे । ऋतूनन्यो विदधज्जायते पुनः" इत्यादौ दर्शनार्थकत्वस्य दर्शनादयं धातुः दर्शनेऽपीति ।

ननु चक्षिङित्यत्र इकारोच्चारणं व्यर्थम् । न च सुखोच्चारणार्थं तदिति वाच्यम् । अकारोच्चारणेनैव तत्सिद्धेः । नाप्यनुदात्तेत्वप्रयुक्तात्मनेपदार्थं तदिति शक्यं वक्तुम्, ङित्वादेव तत्सिद्धेरित्यत आह इकारोऽनुदात्तो युजर्थं इति । अर्थात् "अनुदात्तेतश्च हलादेः" इति ल्युडपवादयुच्प्रत्ययार्थं इत्यर्थः । अकारमुल्लङ्घ्य इकारोच्चारणं तु उच्चारणार्थत्वाभावप्रतिपत्त्यर्थमिति भावः ।

"विचक्षणः प्रथयन्" इति मन्त्रे लित्स्वरनिवृत्तये युच् प्रत्यय इति भावः ।

ननु युच्प्रत्ययार्थमिकारस्य इत्संज्ञावश्यकत्वे नुमागमः स्यादित्यत आह—नुम् तु नेति । कुत इत्यत आह—"इदितो नुम् धातोः" इत्यत्र "गोः पादान्ते" इत्यस्मादन्ते इत्यनुवृत्तेः 'अन्तेदितः' इति व्याख्यानात् ।

नन्विकारे युजर्थम् अनुदात्तेत्वस्य इत्संज्ञकत्वस्य च आवश्यकत्वे तत एवात्मने

पदसम्भवात् ङकारोच्चारणं व्यर्थमित्याशङ्क्याह ङकारस्तु "अनुदात्तत्वप्रयुक्तमात्मनेपदमनित्यम्" इति ज्ञापनार्थः। अर्थात् ङकारः नित्यात्मनेपदार्थः। अनुदात्तत्वप्रयुक्तं त्वात्मनेपदं कदाचिन्न स्यादित्यतो ङकारोच्चारणम्। अत एव "अनुदात्तत्वप्रयुक्तात्मनेपदमनित्यम्" इति विज्ञायत इत्यर्थः। तेन "स्फायच्चिमोंकसन्धि" इत्यत्र स्फायी वृद्धावित्यनुदात्तेतोऽपि लटः शत्रादेशे परस्मैपदं सिद्ध्यति। शानजादेशे त्वात्मनेपदे स्फायमान इति स्यादिति दिक्।

( ख ) "पर्यवसितं नियमयन्" यमोऽपरिवेषणे इत्यपि गणसूत्रम्। भोजनपात्रे ओदनापूपादिभोज्यद्रव्याणां स्थापनं परिवेषणम्। तदाह—"यच्छतिर्भोजनतोऽन्यत्र मित्त्व स्यात्"। भुक्त्यनुकूलपरिवेषणादन्यत्रेति तदर्थः। "यम उपरमे" इत्यस्य उपसर्गवशात्। परिवेषणे ततोऽन्यस्मिन्नप्यर्थे वृत्तिः सम्भवति। तत्र अपरिवेषणे वृत्तौ मित्त्वं नेत्यर्थः। आयामयतीति अत्रापरिवेषणे वृत्ते नं मित्त्वमिति भावः। तदाह द्राघयति। दीर्घीकरोतीत्यर्थः। व्यापारयति। प्रवर्त्तयतीत्यर्थः यमयति ब्राह्मणानिति। परिवेषणार्थकत्वान्मित्त्वमिति भावः। तदाह भोजयतीति। भुञ्जते ब्राह्मणाः, तान्परिवेषणेन प्रवर्त्तयतीत्यर्थः।

ननु "पर्यवसितं नियमयन्नित्यत्र अपरिवेषणार्थकतया मित्त्वाभावात्कथं ह्रस्व इत्यत आह पर्यवसितमित्यादि। नियमनं नियमः ; "यमः समुपनिविषु च" इति भावे अप्प्रत्ययः। तस्मान्मतुप्। नियमवच्छब्दात् "तत्करोति तदाचष्टे" णिचि "णाविष्ठवत्प्रातिपदिकस्य" इति, "विन्मतोर्लुक्" इति। मतुपो लुकि ण्यन्ताल्लटश्शतरि गुणायादेशयोर्नियमयच्छब्द इति भावः। वस्तुतस्तु—मतुपो लुकि टिलोपस्याप्राप्त्या "अचोञ्णिति" इत्यनेन वृद्धौ पुगागमापत्तिः। ततश्च नियमवदित्यर्थकात्। अर्शआद्यजन्तात् नियमशब्दात् "तत्करोति" इति "तत्करोति तदाचष्टे" इति णिचि इष्ठवद्भावाट्टिलोपे तस्य स्थानिवत्त्वादुपधावृद्ध्यभावे नियमयन्निति। समर्थनीयमिति दिक्।

( ग ) "रजो विश्रामयन् राज्ञाम्" "ज्वलह्वलह्मलनमामनुपसर्गाद्वा" इत्यपि गणसूत्रम्। एषां मित्त्वं वेति तदर्थः। प्राप्तविभाषेयमिति ज्वलह्वलह्मलां घटादित्वान्नमेर्मान्तत्वाच्च मित्त्वस्य प्राप्तेरिति भावः। ज्वलयति–ज्वालयति उपसृष्टे तु नित्यं मित्त्वम्। प्रज्वलयति। ननु कथं तर्हि प्रज्वालयति उन्नामयतीति। अनुपसर्गादिति विशेषणे सति ज्वलेर्नमेश्च णौ मित्त्वविकल्पाभावात्

"जनीजॄष् क्नसुरञ्जोऽमन्ताश्च" इत्यनेन मित्वाद्ध्रस्वो नित्यः स्यादित्याक्षेपः । समाधत्ते–घञन्तादिति । तत्करोतीति णावित्यनन्तरं समाधेयमिति शेषः । प्रज्वलनं प्रज्वालः उन्नमनम् उन्नामः । भावे घञ् । उपधावृद्धिः प्रज्वालं करोति उन्नामं करोतीति चार्थे "तत्करोति तदाचष्टे" इति णिचि "णाविष्ठवत्" इति इष्ठवत्त्वात् टिलोपे सति तस्य स्थानिवत्त्वात् मित्वप्रयुक्तह्रस्वाभावे प्रज्वालि उन्नामि इत्याभ्यां लटि तिपि शपि गुणे अयादेशे प्रज्वालयति, उन्नामयतीति रूपे इति भावः ।

ननु संपूर्वात् क्रमेर्णौ "संक्रामयति" इति रूपमिष्यते । तत्र अमन्तत्वेन मित्वाद्ध्रस्वप्रसङ्गः । न च क्रमणं क्राम इति घञन्तात्तत्करोतीति णावुक्तरीत्या ह्रस्वाभाव इति समाधानं सम्भवति । क्रमेर्घञि हि "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इति वृद्धिप्रतिषेधे सति क्रम इत्येव भवति, ननु काम इति कृत्वा उक्तसमाधानासम्भवादित्यभिप्रेत्याक्षिपति कथं संक्रामयतीति" समाधत्ते "मितां ह्रस्वः" इति सूत्रे "वा चित्तविरागे" वेत्यनुवर्त्य मित्वाभावे संक्रामयतीति रूपमित्यन्वयः । ननु कदाचिद्ध्रस्वो दुर्वार इत्यत आह—"व्यवस्थितविभाषाश्रयणादिति" । तथा चात्र ह्रस्वाभाव एवाश्रीयत इति भावः । इति सर्वं वृत्तिकृदिति । भाष्ये तु नैतत् इति भावः । एतेन व्यवस्थितविभाषाश्रयणेन "रजो विश्रामयन् राज्ञाम्" "घुर्यान्विश्रामयेति सः" इत्यादि व्याख्यातमिति दिक् ।

( घ ) "स सीतयो राघवयोरधीयन्" अत्र केचित्तु आर्धधातुके इत्यधिकारे "इणो गा लुङि" इति सूत्रे एतद्वार्तिकपाठस्य भाष्ये दर्शनात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादिति भावः । तन्मते यण् नेति । "इणो यण्" इत्यस्य आर्धधातुकाधिकारस्थत्वाभावान्नातिदेश इत्यर्थः । तेन झोऽन्तादेशे इयङि सवर्णदीर्घे अधीयन्तीत्यायूह्यम् । 'राघवयोरधीयन्' इति । "अधीगर्थदयेषां कर्मणि" इति षष्ठी । राघवौ स्मरन्नित्यर्थः अधिपूर्वात् इण्धातोर्लटः शतरि शपो लुकि इकारस्य इयङि सवर्णदीर्घे अधीयदिति शत्रन्तात् सुबुत्पत्तौ सौ रूपम् ।

( ङ ) 'न विश्वसेदविश्वस्तम्' "तनादिकृञ्भ्य उः" तनादेः कृञश्च उप्रत्ययः स्यादिति तदर्थः । शपोऽपवाद इति अनेन शब्विषय एवास्य प्रवृत्तिरिति सूचितम् । "सार्वधातुके यक्" इत्यतः सार्वधातुकग्रहणस्य "कर्तरि शप्" इत्यतः कर्त्तरीत्यस्य चानुवृत्तेरिति भावः । तेन गणकार्यस्यानित्यतया 'श्वसेत'

इत्यत्र अदादिगणकार्यं शपो लुङ् न भवतीत्यर्थः । वस्तुतस्तु कृञ्ग्रहणस्यात्र भाष्ये प्रत्याख्यातत्वात् उक्तज्ञापनाभावात् विश्वसेत् इत्यसम्बद्धमेवेत्याहुः । विश्वस्तमित्यत्र तु आगमशास्त्रस्यानित्यत्वात् नेडित्याहुरिति ।

---

१९३७

३ वर्षे १ पत्रम् ।

१—दार्वकः, तैषम्, शांशपः, कार्कणः, कालापाः, वाकम्, कांस्यम्, वैशस्त्रम् ।

विशेषसूत्रोपन्यासपुरस्सरमेतानि रूपाणि प्रसाधयत ।

अथवा, तव युवयोः युष्माकं वा अयमिति विग्रहे, शर्कराः सन्त्यस्मिन् देशे इति, केशाः सन्त्यस्येति, अनुकम्पित उपेन्द्रदत्त इति च विग्रहे जायमानानि रूपाणि ससूत्रप्रत्ययनिर्देशं साधयत ।

२—हास्तिकम्, कृतपूर्वी, चक्रीवान्, ज्योत्स्ना, तृप्रालुः, औपयिकः, प्रवाहिकातः कुरु, द्वन्द्वम् । सूत्रविग्रहप्रत्ययनिर्देशपूर्वकमिमानि रूपाणि प्रसाधयत ।

अथवा, "श्रविष्ठा फल्गुनीति" । "नौवयोधर्मविषेति" । "पङ्क्तिविंशतित्रिंशदिति" "इन्द्रियमिन्द्रलिङ्गेति" । सूत्राण्येतानि सकलानि विलिख्य सोदाहरणानि व्याख्येयानि ।

३—"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः" ।

अथवा, "दलद्वये टाबभावः क्लीबे चादड्विरहः स्वमोः । समासे सोरलुक्चेति सिद्धं बाहुलकात् त्रयम्" ॥

इति कारिका सव्याख्यानमुदाहरणे सङ्गमनीया ।

४—शेषे इति लक्षणश्चाधिकारश्चेति, । ऋतोर्वृद्धिमद्विधाववयवानामिति तदन्तविधिः पूर्वत्रेति, । नस्तद्धिते इत्येव सिद्धेऽण्कार्यं ताच्छीलिके णेऽपीति, । तद्वेत्तस्य गोत्रचरणयोर्भावकर्मणी प्राप्तः, अवगतवान्वेति, । कथं षडङ्गुलिदत्तः षडिक इति षषष्ठाजादिवचनात्सिद्धमिति, ।

निर्दिष्टफक्किकासु काश्चन तिस्रः सशङ्कासमाधानं व्याख्येया ।

५—यथा हि जातं हिमवत्सु 'कान्थकम्' । एकाकिनोऽपि परितः पौरुषेय वृता इव । 'एकैकमक्षरं पुंसां महापातकनाशनम्' । अत्र रेखाङ्कितपदानां सिद्धिप्रकारः ससूत्रं व्याख्यायताम् ।

## १—प्रश्नोत्तराणि

उ०—दार्वकः—दार्वा इति बहुवचनान्तो जनपदविशेषे वर्त्तते । तत्र भव इत्यर्थे "अवृद्धादपि बहुवचनविषयात्" इत्यनेन वुञि अनुबन्धलोपे "युवोरनाकौ" इत्यनेन वोरकादेशे तद्धितान्तत्वात्प्रातिपदिकसञ्ज्ञायां सौ रुत्वे विसर्गे च "दार्वकः" इति सिद्ध्यति ।

तैषम्—तिष्ये भवमिति विग्रहे "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" इत्यनेन अणि अनुबन्धलोपे "तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्" इति वार्तिकेन यलोपे णित्वात् "तद्धितेष्वचामादेः" इत्यनेन आदिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे "तैषम्" इति सिद्ध्यति ।

शांशपः—शिंशपाया विकार इति विग्रहे शिंशपाशब्दस्य पलाशादिपाठात् "पलाशादिभ्योऽञ्" इत्यञि "देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसा-मात्" इत्यनेन आदिवृद्धिं प्रबाध्य इकारस्य आकारे, तद्धितान्तत्वात्प्रातिपदिकसञ्ज्ञायां सौ रुत्वे विसर्गे च शांशपः इति सिद्ध्यति ।

कार्कणः—कृकणादागत इति विग्रहे "कृकणपर्णाद्भारद्वाजे" इत्यनेन छप्रत्यये प्राप्ते अपवादत्वात्तं प्रबाध्य "शुण्डिकादिभ्योऽण्" इत्यनेन अणि अनुबन्धलोपे णित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कार्कणः इति सिद्ध्यति ।

कालापाः—१० पृष्ठे द्रष्टव्यम् ।

बाकम्—बकस्यावयवो विकारो वेति विग्रहे "प्राणिरजतादिभ्योऽञ्" इत्यनेन अञि अनुबन्धलोपे ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे बाकम् इति सिद्ध्यति । अत्र "प्राणिनां कुपूर्वम्" इत्यनेनाद्युदात्तत्वात् । "अनुदात्ता-देश्च" इत्यञो न प्राप्तिरतः पूर्वोक्तसूत्रारम्भः ।

कांस्यम्—४५ पृष्ठे द्रष्टव्यम् ।

**वैशस्त्रम्**—विशसितुर्धर्म्यमित्यर्थे विशसितृशब्दात् "विशसितुरिड्लोपश्चाञ्च वक्तव्यः" इत्यनेन अञि अनुबन्धलोपे इटो लोपे ऋकारस्य यणि आदिवृद्धौ प्रातिपदिकत्वात्सोरमादेशे वैशस्त्रम् इति सिद्ध्यति।

अथवा—शर्करा सन्त्यस्मिन् देशे इति विग्रहे रुपाणि ५४ पृष्ठे द्रष्टव्यानि।

## २—प्रश्नोत्तराणि

उ०—**हास्तिकम्**—हस्तिनां समूह इति विग्रहे "अचित्तहस्तिधेनोष्ठक्" इत्यनेन ठकि अनुबन्धलोपे "ठस्येकः" इत्यनेन इकादेशे टिलोपे आदिवृद्धौ च प्रातिपदिकत्वात्सौ सोरमादेशे हास्तिकम् इति सिद्ध्यति।

**कृतपूर्वी** पूर्वं कृतं अनेनेति लौकिकविग्रहः। तत्र पूर्वमिति क्रियाविशेषणम् "सुप्सुपा" इत्यनेन समासे। अनेनेत्यनुवृत्तौ कृतपूर्वशब्दात् "सपूर्वाच्च" इति इनि प्रत्यये "यस्येति च" इत्याकारलोपे तद्धितान्तत्वाद्विभक्तिकार्ये कृतपूर्वी इति सिद्धम्।

**चक्रीवान्**—चक्रम् अस्ति अस्येति विग्रहे—"आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वति" इत्यनेन चक्रशब्दस्य चक्रीभावः "तदस्यास्त्यस्मिन्निति मतुप्" इत्यनेन मतुपि अनुबन्धलोपे "संज्ञायाम्" मतोर्मस्य वकारे प्रातिपदिकत्वात्सौ नुमि च कृते सोर्लोपे संयोगान्तलोपे च कृते चक्रीवान् नाम राजा इति रूपं सिद्ध्यति।

**ज्योत्स्ना**—ज्योत्स्नावयवा ज्योतिषि तान्यस्यां सन्तीति विग्रहे "ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः" इत्यनेन मत्वर्थे ज्योतिष्शब्दात् न प्रत्यये उपधाभूतस्य इकारस्य लोपे च निपातिते सति च इकारस्य लोपे इणः परत्वाभावात् षत्वनिवृत्तौ प्रातिपदिकत्वात्सौ सोर्लोपे ज्योत्स्ना इति सिद्ध्यति। "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः।

**तृप्रालुः**—तृप्रः पुरोडाशः। तं न सहते इति विग्रहे "स्फायितञ्चि" इत्यादिना उणादिसूत्रेण रक्प्रत्ययेऽनुबन्धलोपे "शीतोष्णतृप्रेभ्यस्तदसहने" इति वार्तिकेन चालु प्रत्यये "चुटू" इत्यनेन चकारस्येत्संज्ञायां प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च तृप्रालुः इति सिद्ध्यति।

**औपयिकः**—ऊपाय एवेति विग्रहे ऊपायशब्दात्स्वार्थे "विनयादिभ्य-

ष्ठक्" इत्यनेन ठकि उपायाद्ध्रस्वत्वञ्चेत्यनेन प्रकृतेर्दीर्घस्य ह्रस्वत्वे च कृते ठस्ये-कादेशे कित्वात् "किति च" इत्यनेन आदिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च औपयिकः इति सिद्ध्यति। अत्र ह्रस्वस्य ह्रस्वविधौ वैयर्थ्याद्दीर्घ-स्येति गम्यते।

प्रवाहिकातः कुरु—रोगस्य प्रतीकारः चिकित्सा। तथा च रोगवाचिनः षष्ठ्यन्ताद्वा तसि स्याच्चिकित्सायामिति सूत्रार्थेन "रोगाच्चापनयने" इत्यनेन सूत्रेण तसि प्रत्यये अनुबन्धलोपे सकारस्य रुत्वे विसर्गे च प्रवाहिकातः कुरु इति सिद्ध्यति। प्रतीकारमस्याः कुर्वित्यर्थः।

द्वन्द्वम्—२४ पृष्ठे द्रष्टव्यम्।

## ३—प्रश्नोत्तराणि

उ०—"तदस्यास्त्यस्मिन्निति मतुप्" इति सूत्रे इति शब्दो विषयविशेष-लाभार्थः।

तदाह—"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः॥

अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः। भूमा बहुत्वम्। तच्चापेक्षिकम्। यस्य हि यावदुचितं तावदेव बहुत्व बोधकबहुशब्देनापि प्रतीयते। यथा पञ्चषाभिरपि गोभिर्देवदत्तस्य बह्वो गाव इति व्यवहारः। राज्ञस्तु सहस्रगोरपि गावोऽल्पा इति व्यवहारः। गोमान्। यवमान्। यस्य खार्यादिभिः परिच्छिन्ना यवाः सन्ति स एवमुच्यते। न तु सह-स्रेणापि यवैर्यवमानिति। कथं तर्हि 'यवमतीभिरद्भिर्यूपं प्रोक्षति' इति। अत्राहुः—जातिमात्रसम्बन्धस्य विवक्षितत्वाद्भूमाभावेऽप्यत्र मतुप्। भूमादिग्रहणं तु प्राये-ण—भूमादयः प्रतीयन्तः इत्येवपरमिति। निन्दायाम्—ककुन्दा वर्तिनी कन्या। प्रशंसायाम्—रूपवान्। नित्ययोगे—क्षीरिणो वृक्षाः। अतिशायने—उदरिणी कन्या। संसर्गे—दण्डी। संसर्गः संयोगः। तेन संयुक्तदण्डएवोच्यते, ननु गृहावस्थितद-ण्डोऽपि। इह दण्डपुरुषयोः संयोगे सत्यपि दण्डी पुरुष इत्यादिवत् "पुरुषी दण्डः, पुरुषवान् दण्डः" इति न प्रयुज्यते। वृत्तिनियामकस्य विलक्षणसम्बन्धस्या-भावात्। संयोगे समानेऽपि प्रतीतिबलाद्वैलक्षण्यं कल्प्यत इत्याहुः। एवं च यव-संसर्गमात्रेण यवमत्य आपो न भवन्ति, किन्तु-यवमज्जलवच्च पात्रमेवेत्याशयेन

कथं "यवमतीभिरद्भिः" इत्याक्षेपो भूमादिग्रहणं प्रायिकमित्याद्युत्तरं च सङ्गच्छत एवेति ।

## ४—प्रश्नोत्तराणि

उ०—शेषे इति लक्षणश्चाधिकारश्च ३८ पृष्ठे द्रष्टव्यम् ।

"ऋतोर्वृद्धिमद्विधावयवानामिति तदन्तविधिः पूर्वत्र" इति । अवयवात्किम्—पूर्वासु वर्षासु भव इति विग्रहे "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासः । आदिवृद्धिरेव । नतु उत्तरपदादिवृद्धिः । पूर्वपदस्यावयववृत्तित्वाभावात् ।

ननु कथमिह "वर्षाभ्यष्ठक्" इति ठक् । प्रत्ययविधौ तदन्तविधिप्रतिषेधात् तत्राह—ऋतोरिति । अवयववाचकानां शब्दानामुपरि स्थितात् ऋतुवाचकात् । वृद्धिनिमित्तकप्रत्ययविधाने कर्तव्ये तदन्तविधिर्वाच्य इत्यर्थकेन "येनविधिस्तदन्तस्य" इति सूत्रभाष्यस्थितवचनेन पूर्वत्र पूर्वमुदाहृते उदाहरणे तदन्तविधिरित्यर्थः । तथाच पूर्ववार्षिक इत्यत्र पूर्वहैमन इत्यत्र चोदाहरणे "वर्षाभ्यष्ठक्" इति ठक् "सर्वत्राण् च तलोपश्च" इत्यण्तलोपौ च सिध्यन्ति । इह तु नेति । अवयवत्वाभावात् । प्रत्युदाहरणे तु तदन्तविधिर्नास्ति । पूर्वासु वर्षास्विति सामानाधिकरण्येन पूर्वशब्दस्य अवयववृत्तित्वाभावादित्यर्थः । ततश्चप्रत्युदाहरणे पौर्ववार्षिक इत्यत्र "कालाट्ठञ्" इति ठञेव न तु ठक् । स्वरे विशेषः । पौर्वहैमन्तिक इत्यत्रापि ठञेवेति भावः ।

कथं षडङ्गुलिदत्तः षडिकः—६३ पृष्ठे द्रष्टव्यम् ।

## ५—प्रश्नोत्तराणि

उ०—"यथा हि जातं हिमवस्तु कान्थकम्"—वर्णुसमीपदेशे वर्णुः—तद्विषयार्थवाचिकन्थाशब्दाद्वुक् स्यादित्यर्थकेन "वर्णौ वुक्" इति सूत्रेण वर्णुः समीपदेशो वर्णुः, तस्मिन् या कन्था तद्वाचकादिति विग्रहे वुकि "युवोरनाकौ" इति सूत्रेण वोरकादेशे कित्वात् "किति च" इत्यनेनादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे कान्थकम् इति सिद्धयति ।

"एकाकिनोऽपि परितः पौरुषेय वृता इव"—पुरुषस्य वधः पौरुषेय इत्यत्र "तस्येदम्" इत्यनेन अणि प्राप्ते पुरुषस्य विकार इत्यर्थे "प्राणिरजतादिभ्या-

ऽञ्" इत्यनेन अञि प्राप्ते पुरुषाणां समूहः इत्यर्थे "तस्य समूहः" इत्यणि प्राप्ते "सर्वपुरुषाभ्यां णढञौ" इत्यनेन ढञि अनुबन्धलोपे ढस्येयादेशे ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "पौरुषेयः" इति सिद्ध्यति । तेन 'एकाकिनोऽपि परितः पौरुषेय वृता इव' इति माघप्रयोगोऽपि सङ्गच्छत इति ।

"एकैकमक्षरं" पुंसां महापातकनाशनम् । एकैकमित्यत्र एकमित्यस्य "नित्यवीप्सयोः" इत्यनेन द्विर्वचने सति, एकमेकमिति स्थिते "एकं बहुव्रीहिवत्" इत्यनेन बहुव्रीहिवद्भावेन सुपो लुकि कृते बहुव्रीहिवद्भावादेव पुनः प्रातिपदिकत्वात्समुदायात्सुपि सोरमादेशे एकैकम् इति सिध्यति । ननु यत्र सङ्घाते पूर्वोभागः पदं तस्य चेद्भवति तर्हि समासस्यैवेति नियमेन समुदायस्य प्रातिपदिकत्वाभावात् कथमिह सुपो लुक् कथं वा समुदायायात्सुबित्यत आह—बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुबिति दिक् ।

---

१९३७

३ वर्षं २ पत्रम् ।

१—उत्तम्भते, तितिपिषे, स्यन्त्स्यति, म्रियात्, अभ्रमीत्, इमानि रूपाणि साधयत ।

२—प्रणिमयते, ऊखतुः, धिनवाव, विव्यतुः, आनृजे, अगूढ, जघृक्षे, रेजे ।

एषु कानिचित्पञ्च रूपाणि सविशेषं साधनीयानि ।

३—चक्षूधातोः ख्याधातोर्वा केषु लकारेषु प्रयोगो भवतीति सप्रमाणं व्यवस्थापय ।

४—निम्नलिखितेषु केषु चित्चतुर्षु वाक्येषु विरोधमुद्भाव्य तत्परिहारः करणीयः ।

( क ) 'उदयति विततोर्ध्वरश्मिरज्जौ' ।

( ख ) 'कमलवनोद्घाटनं कुर्वते ये' ।

( ग ) 'विज्ञापनाभर्तृषु सिद्धिमेति' ।

( घ ) 'नमो वाकं प्रशास्महे' ।

(ङ) 'निशामय तदुत्पत्तिम्' ।
(च) 'स्फायन्निर्मोकसन्धि' ।

५—जघसिथ, अवधीत्, अघुक्षत्, आस्ताम्, सधि, एषु विशेषकार्याणि दर्शयत ।

## १—प्रश्नोत्तराणि

उ०—उत्तम्भते—इकारेत्संज्ञक उदुपसर्गकात् ष्टम्भ्धातोरात्मनेपदे लटि । "धात्वादेः षः सः" इत्यनेन षकारस्य सत्वे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषया टकारस्य तकारे "उदः स्थास्तम्भोः पूर्वस्य" इत्यनेन पूर्वसवर्णो सकारस्य थकारे इदित्वान्नुमि उभावितौ अनुस्वारे परसवर्णे च कृते थकारस्य "खरि च" इत्यनेन चर्त्वे "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे "उत्तम्भते" इति सिद्धयति ।

तितिपिषे—ऋकारेत्संज्ञक तिपधातो लिटि आत्मनेपदे थासप्रत्यये "थासः से" इत्यनेन से इत्यादेशे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे च कृते "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे सस्य षत्वे तितिपिषे । इति सिद्धयति ।

स्यन्त्स्यति—७६ पृष्ठे द्रष्टव्यम् ।

भ्रियात्—मृत्यस्माद्धातोर्लिङ्लकारे तिप्प्रत्ययेऽनुबन्धलोपे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इत्यनेन यासुडागमे अनुबन्धलोपे "लिङः सलोपोऽनन्त्यस्य" इत्यनेन सस्य लोपे मृ यात् इति स्थिते "रिङ् शयग्लिङ्क्षु" इत्यनेन ऋकारस्य रिङादेशे भ्रियात् इति रूपं सिद्धयति ।

अभ्रमीत्—चलनार्थक-उकारेत्संज्ञकभ्रम् धातोर्लुङि परस्मैपदे तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिचि इचावितौ इडागमे "इट ईटि" इत्यनेन सस्य लोपे "वदव्रजहलन्तस्याचः" इत्यनेन प्राप्तायाः वृद्धेः "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इत्यनेन निषेधे अभ्रमीत् इति सिद्धयति ।

## २—प्रश्नोत्तराणि

उ०—प्रणिमयते—५९ पृष्ठे द्रष्टव्यम् ।

ऊखतुः—४० पृष्ठे द्रष्टव्यम् ।

धिनवाव—प्रीणनार्थक इकारेत्संज्ञकधिव्इत्यस्माद्धातोर्लोट्लकारे वस्प्रत्यये इदित्वान्नुमि उभावितौ सार्वधातुकसंज्ञायाम् "धिन्विकृण्व्योर च" इत्यनेन वकारस्याकारे उप्रत्यये च कृते "लोपश्चास्यान्यतरस्याम्म्वोः" इति प्राप्तात् नित्यत्वादुकारलोपात्पूर्वमाटि कृतेऽनुबन्धलोपे गुणेऽवादेशे च कृते "नित्यं ङितः" इत्यनेन सस्य लोपे धिनवाव इति सिध्यति ।

विव्यतुः—८ पृष्ठे द्रष्टव्यम् ।

आनृजे—४९ पृष्ठे द्रष्टव्यम् ।

अगूढ—६७ पृष्ठे द्रष्टव्यम् ।

जघृते—२८ पृष्ठे द्रष्टव्यम् ।

रेजे—ऋकारेत्संज्ञकदीप्त्यर्थकात् राज्धातोः स्वरितत्वात् "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यनेन वैकल्पिकेनात्मनेपदे तप्रत्यये "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे अभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे अत्र "अत एकहल्मध्येऽनादेशादेर्लिटि" इति सूत्रात् "फणां च सप्तानाम्" इति सूत्रे अत इत्यनुवृत्तावपि विधानासामर्थ्यादातो विकल्पेन एत्वाभ्यासलोपयोः कृतयोः रेजे इति सिद्ध्यतीति तदभावे-रराजे इति सिद्ध्यति ।

## ३—प्रश्नोत्तराणि

उ०—घस्लृ अदने । अयं धातु र्न सार्वत्रिकः । यद्ययं सार्वत्रिकः स्यात्तदा लिट्यपि प्रयुज्येत । "लिट्यन्यतरस्याम्" इत्यनेन विकल्पेन अदेर्घस्लादेशविधानारम्भसामर्थ्यात् सर्वत्र प्रयोगे विकल्पेनादेशविधानं व्यर्थं स्यादिति तस्मात्—यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः । अत्रैव पाठः शपि परस्मैपदे लिङ्गम् । अनिट्कारिकासु पाठो वलाद्यार्धधातुके । क्मरचि तु विशिष्योपादानमिति ।

ख्या प्रकथने । अयं सार्वधातुकमात्रविषयः । अत्र मानन्तु "सस्थानत्वं नमः ख्यात्रे" इति वार्तिकं तद्भाष्यमेव । अन्यथा यद्ययमार्धधातुकेऽपि प्रयुज्येत तर्हि तृजन्तेऽस्मिन् परे "शर्परे विसर्जनीयः" इत्यस्याप्रवृत्त्या "कुप्वोः ≍क ≍पौ च" इति जिह्वामूलीयो दुर्वारः स्यादेवेति तद्भावः । ख्याञादेशस्य ख्शादित्वे प्रयोजनमिति वार्तिककाराद्युक्तिर्व्याकुप्येतेति भावः । संपूर्वस्य ख्यातेः

"संख्याति" इत्यादिप्रयोगो नास्त्येव । "संख्येति" प्रयोगस्तु ख्यानादेशस्येति न्यासकाराशयः ।

## ४—प्रश्नोत्तराणि

उ०—(क) "उद्‌यति विततोर्ध्वं रश्मिरज्जौ"—१०९ पृष्ठे द्रष्टव्यम् ।

(ख) "कमलवनोद्घाटनं कुर्वते ये"—१०९ पृष्ठे द्रष्टव्यम् ।

(ग) "विज्ञापनाभर्तृषु सिद्धिमेति"—१०९ पृष्ठे द्रष्टव्यम् ।

(घ) नमोवाकं प्रशास्महे—आङः शासु इच्छायामिति । आशास्ते । आशासाते । अत्र—आङ्पूर्वत्वं प्रायिकमिति । तेन "नमो वाकं प्रशास्महे" इत्यत्र "नमस्ते रुद्रमन्यवे" इत्यत्र नमो वचनम् । वचेर्घञ् । "चजोः कु घिण्यतोः" इत्यनेन कुत्वमिति ।

(ङ) "निशामय तदुत्पत्तिं विस्तराद्गदतो मम" शमो दर्शने । गणसूत्र-मिदम् । शाम्यतिदर्शने मिन्न स्यादिति तदर्थः । निशामयति रूपमिति । अन्यत्र तु—प्रणयिनो निशमय्य वधूः कथाः । कथं तर्हि—निशामय तदुत्पत्ति-विस्तराद्गदतो ममेति । शम आलोचने इति—चौरादिकस्य धातूनामनेकार्थत्वाच्छ्र-वणेऽपि वृत्तिः "शाम्यतिवदिति" अयम्भावः—यथा—शाम्यति निशामयतीत्यादौ दर्शने प्रयुज्यते । तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीत्यर्थः ।

(च) "स्फायन्निर्मोकसन्धिः"—१३० पृष्ठे द्रष्टव्यम् ।

## ५—प्रश्नोत्तराणि

उ०—जघसिथ—भक्षणार्थक अदधातोर्लिटि "लिट्यन्यतरस्याम्" इत्यनेन अदो विकल्पेन घस्लादेशे थिपि प्रत्यये थिपो थलि "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेनाभ्यासस्य लोपे "कुहो-श्चुः" इति चुत्वे जश्त्वे च कृते घसस्तासावभावात्थलि नित्यमिटि तेन "जघसिथ" इति सिद्ध्यति ।

"अवधीत्—" हिंसागतिरूपार्थवाचकाद् हन्—इत्यस्माद्धातो लुङि परस्मैपदे तिपि अनुबन्धलोपे लावस्थायामेव विवक्षितेऽडागमे ऽनुबन्धलोपे "लुङि च" इत्यनेन वधादेशे वधादेशोऽयमदन्तः । आर्धधातुके इति च विषयसप्तमी तेनार्धधातुकोपदेशे अकारान्तत्वादतोलोपे । "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिचि इचावितो "आर्धधातुकस्येड्वलादेः" इत्यनेन

इडागमे "अस्तिसिचोऽपृक्ते" इत्यनेन च ईडागमे "इट ईटि" इत्यनेन सलोपे "वदव्रजहलन्तस्याचः" इत्यनेन प्राप्ताया अपि वृद्धेः अल्लोपस्य स्थानिवत्त्वात् "अतो हलादेर्लघोः" इत्यनेन निषेधात् "अवधीत्" इति सिद्ध्यति।

अधुक्षत्—प्रपूरणार्थकात् दु इत्यस्माद्धातोर्लुङि तत्र स्वरितत्वात्–परस्मैतपपक्षे तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे अदुह् त् इति "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इति सिचि इचावितौ । अ दुह स् त् इति जाते "हो ढः" इत्यनेन ढत्वे "षढोः कः सि" इत्यनेन ढस्य कत्वे "आदेशप्रत्यययोः" इत्यनेन सस्य षत्वे कषसंयोगे क्षे इति जाते अधुक्षत् इति सिद्ध्यति । परस्मैपदाभावे । आत्मनेपदे अधुक्षत् इति सिद्ध्यति ।

आस्ताम्–भुवीत्यर्थकात् असधातोर्लुङि त प्रत्यये "तस्थस्थमिपां तांतंतामः" इत्यनेन तामादेशे "श्नसोरल्लोपः" इत्यनेनाल्लोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे प्राप्ते श्नसोरित्यल्लोपस्यासिद्धत्वात् "आडजादीनाम्" इत्यनेन आडागमे अनुबन्धलोपे आस्ताम् इति सिध्यति ।

सधि—१९ पृष्ठे द्रष्टव्यम् ।

---

१९३८

३ वर्षे । १ पत्रम् ।

१—भावत्कः, वार्त्तनः, शौवास्तिकम्, वाटरम्, सांवहित्रम्, आप्यम्, मार्गिकः, यात्रम्, विशेषसूत्रोपन्यासमुखेन रूपाण्येतानि प्रसाधयत ।

२—प्रतिकः, द्विपाद्यम्, वैरङ्किकः, समीनः, चिक्कम्, इयान्, श्रोत्रियः, एकैकस्मै देहि, रूपाणीमानि सूत्रविग्रहप्रत्ययनिर्देशपूर्वकं प्रसाधत ।

३—"आसन्दीवदष्ठीवदि"ति ।
"ज्योत्स्नातमिस्राश्रृङ्गिण" इति ।
"प्रियस्थिरस्फिरोरुबहुले"ति ।
सूत्राण्येतानि सकलानि विलिख्य सोदाहरणानि व्याख्यायन्ताम् ।

अथवा—

छात्रादिगणे तदादिविधौ किं ज्ञापकम् ? इतः प्राक् तदन्तविधौ कथमसमासग्रहणस्य ज्ञापकता । परिमाणग्रहणेन कालपरिमाणस्य न ग्रहणमित्यत्र किं ज्ञापकम् ? किञ्चैतेषां फलानीति साधु विविच्यताम् ।

४—"आकर्षात्पर्पादे भंस्त्रादिभ्यः कुसीदसूत्राच्च ।
आवसथात् किसरादेः षितः षडेते ठगधिकारे ॥"
कोऽर्थोऽस्य ? परिगणनस्य च किं प्रयोजनम् ।

अथवा—

"चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥"
इमां कारिकां व्याख्याय तदुदाहरणानि प्रदर्शयत ।

५—विवृद्धौ कर्णौ यस्येति, हृदयमस्यास्तीति, शमस्यास्तीति विग्रहे कानि रूपाणि भवन्ति कथञ्च तत्सिद्धिः ।

अथवा—

निवासाभिजनयोः, अङ्कलक्षणयोः, प्रमाणपरिमाणयोः, पूगव्रातयोः, कार्त्स्न्याभिविध्योश्च पदार्थयोः परस्परं को भेदः ?

## १—प्रश्नोत्तराणि

उ०—भावत्कः—भवत इदमिति विग्रहे "त्यदादीनि च" इत्यनेन वृद्धसञ्ज्ञायाम् "भवतष्ठक्छसौ" इत्यनेन ठकि अनुबन्धलोपे "इसुसुक्तान्तात्कः" इत्यनेन कादेशे वृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च भावत्कः इति सिद्ध्यति ।

वार्तनः—९६ पृष्ठे द्रष्टव्यम् ।

शौवास्तिकः—१११ पृष्ठे द्रष्टव्यम् ।

वाटरम्—वटरेन कृतमिति विग्रहे "क्षुद्राभ्रमरवटरपादपादञ्"इत्यनेन अञि अनुबन्धलोपे ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे । वाटरम् इति सिद्ध्यति ।

सांवहित्रम्"—२ पृष्ठे द्रष्टव्यम् ।

आप्यम्—ननु "नित्यं वृद्धशरादिभ्य" इति सूत्रस्थ एकाचो नित्यमिति वार्तिकेन नित्ये मयटि कृते आप्ययमिति स्यात्। कथं तर्हि "आप्यम् अम्मयमिति" अत्रोच्यते—अपामिदमापम् तस्येदमित्यणन्तात्स्वार्थे चतुर्वर्णादित्वात् ष्यञि आप्यमिति रूपं सिद्धयति।

मार्गिकः—मृगान् हन्तीति विग्रहे "पक्षिमत्स्यमृगान्हन्ति" इति सूत्रेण ठगि अनुबन्धलोपे "ठस्येकः" इत्यनेन इकादेशे आदि वृद्धौ प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते "मार्गिकः" इति सिद्धयति।

यात्रम्—यातुर्धर्म्यमिति विग्रहे ऋदन्तात् षष्ठ्यन्तात् धर्म्यमित्यर्थकेन "ऋतोऽञ्" इति सूत्रेण अञि अनुबन्धलोपे ञित्वादादिवृद्धौ प्रातिपदिकत्वात्सौ सोरमादेशे "यात्रम्" इति सिद्धयति।

## २—प्रश्नोत्तराणि

उ०—प्रतिकः—६२ पृष्ठे द्रष्टव्यम्।

द्विपाद्यम्—द्वाभ्यां पादाभ्यां क्रीतमितिविग्रहे "पणपादमाषशताद्यत्" इति सूत्रेण यति अनुबन्धलोपे भसंज्ञायाम् "यस्येति च"इत्यनेनाकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे "द्विपाद्यम्"इति सिद्धयति। अत्र "अचः परस्मिन् पूर्वविधौ"इतिसूत्रेण अल्लोपस्य स्थानिवद्भावात् "पादः पत्"इत्यनेन पदादेशो न। नच तर्हि "पद्यत्यतदर्थे"इत्यनेन पदादेशो कुतो नेति चेन्न। व्याख्यानात् तत्र सूत्रे प्राण्यङ्गार्थस्यैव ग्रहणात्। इह सूत्रे पणमाषसाहचर्यात् पादशब्दोऽपि परिमाणविशेषवाची गृह्यत इति शम्।

वैरङ्गिकः—विरागं नित्यमर्हतीति विग्रहे "छेदादिभ्यो नित्यम्"इति सूत्रेण ठक्प्रत्ययेऽनुबन्धलोपे "विराग विरङ्ग च"इतिवार्तिकेन विरागशब्दस्य विरङ्गादेशे च कृते "किति च"इत्यनेनादिवृद्धौ ठस्येकादेशे भसंज्ञायाम् "यस्येति च"इत्यनेनाकारलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते वैरङ्गिकः इति सिद्धति।

समीनः—समामधीष्टो भृतो भूतो भावी वेति विग्रहे "समायाः खः"इति सूत्रेण खप्रत्यये खस्येनादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च 'समीनः'इति सिद्धयति।

चिक्कम्—नासिकाया नतमिति विग्रहे "इनच्पिटच्चिकचि च" इति इति सूत्रस्थ "कप्रत्ययचिकादेशौ च वक्तव्यौ" इति वार्तिकेन क प्रत्यये नेः चिकादेशे च कृते प्रातिपदिकत्वात्सौ सोरमादेशे चिक्कम् इति सिद्धयति ।

इयान्—इदं परिमाणमस्येति विग्रहे इदमशब्दात् "किमिदंभ्यां वो घः" इति सूत्रेण वतुपि वकारस्य घकारे च कृते "आयनेयीनीयियः फढखछघां-प्रत्ययादीनाम्" इति सूत्रेण घस्य इयादेशे च कृते इदम् इयत् इति स्थिते "इदङ्किमोरीश्की" इति सूत्रेण शित्वात् "अनेकालशित्सर्वस्य" इति सूत्रबलादिदमः ईकारे सर्वादेशे कृते भसंज्ञायाम् "यस्येति च" इत्यनेन ईकारस्य लोपे इयत् इति प्रत्ययमात्रं शिष्यते । ततः प्रातिपदिकसंज्ञायां सौ विभक्तौ उगित्वात् "उगिदचां सर्वनामस्थाने धातोः" इति नुमि च कृते उमावितौ "सर्वनाम-स्थाने चासम्बुद्धौ" इत्यनेन दीर्घे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सलोपे तकारस्य संयोगान्तलोपे च कृते इयान् इति सिद्धयति ।

श्रोत्रियः—छन्दांसि अधीते इति विग्रहे द्वितीयान्ताच्छन्दश्शब्दात् अधीते इत्यर्थे घन् भवतीत्यर्थकेन "श्रोत्रियंश्छन्दोऽधीते" इति सूत्रेण घन् प्रत्यये प्रकृतेः निपातनात् श्रोत्रादेशे च कृते "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इत्यनेन घस्येयादेशे च कृते प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते श्रोत्रियः इति सिद्धयति ।

एकैकस्मै देहि—११३ पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि

उ०—"आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती" इति । एते षट्सञ्ज्ञायां निपात्यन्ते । तत्र आसन्दीवान् ग्रामः इत्यत्र आसनशब्दस्य आसन्दीभावः । अन्यत्र—आसनवान् इत्येव । अष्ठीवान् नाम ऋषिः इत्यत्र च अस्थिशब्दस्याष्ठीभावः अस्थिमान् अन्यत्रेति । चक्रीवान्नाम राजा इत्यत्र च चक्रशब्दस्य चक्रीभावः । चक्रवान् अन्यत्र । कक्षीवान् नामऋषिः इत्यत्र कक्ष्यायाः सम्प्रसारणं च निपात्यते । कक्ष्यावान् अन्यत्र । रुमण्वान् नाम पर्वतः इत्यत्र च लवणशब्दस्य रुमण्भावो निपात्यते । लवणवान् अन्यत्रेति च । चर्मण्वती नामनदी 'इत्यत्र चर्मणो नलोपाभावो णत्वं च' निपात्यते । चर्मवती अन्यत्रेति च बोद्धयम् ।

"ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः"

एते मत्वर्थे निपात्यन्त इति । तत्र ज्योत्स्ना इत्यत्र ज्योतिषउपधालोपो नश्चप्रत्ययः। तमिस्रा इत्यत्र च 'तमस उपधाया इत्वं रश्च' निपात्यते । स्त्रीत्वमत्राविवक्षितम् । तेन तमिस्रम् इत्यपि । शृङ्गिणः इत्यत्र च 'शृङ्गादिनच्' निपात्यते । ऊर्जस्वलः इत्यत्र च ऊर्जसोवलच् निपात्यते । वलच्प्रत्ययेन कदाचिद्बाधोमाभूदिति विनिरपि भवति तेन ऊर्जस्वी इत्यपि । ऊर्जस्वतीः इतिवदसुगन्तत्वेनैवोपपत्तेः । "ऊर्जोऽसुगागमः" इति वृत्तिस्तु चिन्त्या । गोमी इत्यत्र च 'गोशब्दान्मिनिः' । निपात्यते । मलिनः इत्यत्र च 'मलशब्दादिनच्' प्रत्ययो निपात्यते । 'ईमस' इति तेन 'मलीमस' इत्यपि सिद्ध्यति ।

"प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगवर्षित्रब्द्राघिवृन्दाः" इति । प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिष्विति सूत्रार्थः । तत्र 'प्रेष्ठः' इत्यत्र अतिशयेन प्रिय इति विग्रहे "अतिशायने तमबिष्ठनौ" इत्यनेन इष्ठन्प्रत्यये कृते ततोऽनेन प्रियशब्दस्य 'प्र'इत्यादेशः । अत्राभीयत्वेनासिद्धत्वादकारोच्चारणसामर्थ्याच्च न टिलोपः । ततो "आद्गुणः" इत्यनेन गुणे प्रेष्ठः, इति सिद्ध्यति । स्थेष्ठः, इत्यत्र च स्थिरशब्दादिष्ठनि प्रकृते स्थादेशः । प्रकृतिभावाच्च टिलोपः । स्फेष्ठः इत्यत्र च स्फिरशब्दस्य इष्ठनि स्फादेशः। वरिष्ठः इत्यत्र च उरु शब्दात् इष्ठनि वर्इत्यादेशः । बंहिष्ठः इत्यत्र च बहुलशब्दस्य बंहि इत्यादेशः । अत्र इकारः उच्चारणार्थः । अन्यथाभीयत्वेनासिद्धत्वात् उच्चारणसामर्थ्याद्वा इकारस्य लोपो न स्यात् । गरिष्ठः इत्यत्र च गुरुशब्दस्य इष्ठनि गर्इत्यादेशः । वर्षिष्ठः इत्यत्र च वृद्धशब्दस्य इष्ठनि वर्षिरादेशः । अत्रापि बंहिवदिकार उच्चारणार्थः । त्रपिष्ठः इत्यत्र च तृप्रशब्दस्य इष्ठनि त्रप् इत्यादेशः अदुपधः । तृपधातोस्तृप्त्यर्थकादौणादिके रकि तृप्रशब्दः । द्राघिष्ठः इत्यत्र च दीर्घशब्दस्य इष्ठनि द्राघिरादेशः । बंहिवदिकारउच्चारणार्थः । वृन्दिष्ठः इत्यत्र च वृन्दारकशब्दस्य इष्ठनि वृन्द इत्यादेशः । अकारउच्चारणार्थः । एवमीयसुन्प्रत्यये कृते तु—प्रेयान्, स्थेयान्, स्फेयान्, वरीयान्, बंहीयान्, गरीयान्, वर्षीयान्, त्रपीयान्, द्राघीयान्, वृन्दीयान्, इत्यादीनि ज्ञेयानि अत्र इमनिजनुवृत्तेः प्रयोजनमाह—प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वादिमनिचि—'प्रेमा' इत्यादीनि च ।

## ४—प्रश्नोत्तराणि

उ०—"आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच । "आवसथात्किसरादेः षितः षडेते ठगधिकारे । श्लोकवार्तिकमिदम् । "प्राग्वहतेष्ठक्" इत्यादौ ठगिति वा छगिति वा छेद इति संशयनिवृत्त्यर्थम् । "आकर्षात्ष्ठल्" इति सूत्रभाष्ये पठितम् । तत्र आकर्षादित्यनेन "आकर्षात्ष्ठल्" इति सूत्र विवक्षितम् । "पर्पादिभ्यः" इत्यनेन च "पर्पादिभ्यः ष्ठन्" इति सूत्रं विवक्षितम् । भस्त्रादिभ्य इत्यनेन "भस्त्रादिभ्यः ष्ठन्" इति सूत्रं विवक्षितम् । कुसीदसूत्रादित्यनेन "कुसीददशैकादशात् ष्ठन्ष्ठचौ" इति सूत्रं विवक्षितम् । आवसथादित्यनेन 'आवसथात्ष्ठल्' इति सूत्रं विवक्षितम् किसरादेरित्यनेन "किसरादिभ्यः ष्ठन्" इति सूत्रं विवक्षितम् । "प्राग्वहतेष्ठक्" इत्यधिकारे एतैः सूत्रैर्विहिताः षट् प्रत्ययाः षित इत्यर्थः ।

ननु "कुसीददशैकादशात् ष्ठन्ष्ठचौ" इत्यनेन प्रत्ययद्वयविधानात् एतत्सूत्रषट्कविहिताः सप्त प्रत्ययाः लभ्यन्त इति षट् षित इति कथमित्यत आह—षडितीति । षडित्यनेन सूत्राभिप्रायं षट्त्वं विवक्षितमिति भावः ।

## ५—प्रश्नोत्तराणि

विवृद्धौ कर्णौ यस्येति विग्रहे—कर्णिलः कर्णी, कर्णिकः, कर्णवान्, इति चतुष्टयं रूपम् । तत्र कर्णिलः इत्यत्र विवृद्ध्युपाधिकात्स्वाङ्गवाचिनः इलजादयः स्युरित्यर्थक 'स्वाङ्गाद्विवृद्धौ' इति वार्तिकेन इलच् प्रत्ययेऽनुबन्धलोपे 'कर्णिलः' इति रूपम् । इनि प्रत्यये तु 'कर्णी' इति रूपम्, ठन् प्रत्यये तु 'कर्णिकः' इति रूपम् । मतुपि कृते तु 'कर्णवान्' इत्यादीनि रूपाणि सिद्ध्यन्ति ।

हृदयमस्यास्तीति विग्रहे हृदयालुः हृदयी, हृदयिकः, हृदयवान् । इति रूपचतुष्टयम् । तत्र हृदयालुः इत्यत्र "हृदयाच्चालुरन्यतरस्याम्" इति वार्तिकेन विकल्पेन चालुप्रत्यये 'चुटू' इत्यनेन चकारस्येत्संज्ञायाम् प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च हृदयालु इति सिद्ध्यति । इनि प्रत्यये तु 'हृदयो' इति रूपम् । ततः ठनि कृते तु हृदयिक इति रूपं भवति । मतुपि सति तु हृदयवान् इति रूपं च सिद्ध्यति ।

शमस्यास्तीति विग्रहे शंवः, शंभः, शंयुः, शंतिः, शंतुः, शंतः,

शंयः, इत्यादीनि सप्त रूपाणि भवन्ति । तत्र शंवः इत्यत्र "कंशंभ्यां बभयुस्तितुतयसः" इति सूत्रे शमिति मान्तमव्ययं सुखेऽर्थेवर्त्तते। तत्र इमे सप्त प्रत्ययाः क्रमेण भवन्ति । वप्रत्यये कृते 'शंवः' इति मप्रत्यये शंभः इति, युस् प्रत्यये शंयुः इति । अत्र युस्यसोः सकारः पदत्वार्थः । तिप्रत्यये । शंति । इति तुप्रत्यये शंतुः इति तप्रत्यये शंतः इति यस् प्रत्यये-शंयः इत्यादीनि रूपाणि ज्ञेयानि । अनुस्वारस्य वैकल्पिकः परसवर्णः । वकारयकारपरस्यानुनासिको वयौ इति।

---

१९३८

३ वर्षे २ पत्रम् ।

१—भवतात्, न्यषेधीत् , मम्रचत्, विस्तम्भते, क्षंसीष्ट, एते प्रयोगाः साधु साधनीयाः ।

२—अक्ष्वात, प्रविघाटयिता, म्रेमतुः, अमुह्णहि, ओषीष्ट, एतेषु साधुत्वमन्वाख्येयम् ।

३—जुगुप्सांचक्रे, पर्यष्वङ्क्त, अयंसिष्टाम् , आध्वम् , औष्टाम् , इमानि साधु साधनीयानि ।

४—श्रुचुधातोर्लुङि, श्रपेर्लिटि, कृपेर्लुटि, गातेर्लिङि, जाग्रोर्लङि लुङि च प्रथमपुरुषैकवचने रूपाणि विशेषविधिविधानपूर्वकं लेख्यानि ।

५—( क ) "लः कर्मणि च भावे चाकर्मकेभ्यः" ।

( ख ) सन्वल्लघुनि चङ्परेऽनग्लोपे ।

( ग ) "अतो येयः"

( घ ) "णेरनिटि"

( ङ ) "अस्तिसिचोऽपृक्ते"

एषु सद्वितीयं किमपि सूत्रमेकमुपपत्त्यनुपपत्तिप्रदर्शन पूर्वकं व्याख्येयम् ।

अथवा—

( क ) 'सार्वधातुके किं चिकीर्ष्यात्' ।

( ख ) 'सञ्ज्ञायाः कार्यकालत्वात्' इत्यादि ।

( ग ) 'नान्येमिताऽहेताविति' ।

एतासामन्यतमे फक्किके व्याख्येये ।

# १—प्रश्नोत्तराणि

उ०—भवतात्—भू इत्यस्य "भूवादयो धातवः" इत्यनेन धातुसञ्ज्ञायाम् "लोट् च" इत्यनेन लोट्लकारे प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसञ्ज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि शपावितौ "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽवादेशे च कृते "एरुः" इत्यनेन इकारस्योकारे "तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" इत्यनेन तुह्योस्तातङादेशे "अनेकाल्शित्सर्वस्य" "ङिच्च" इत्युभयोरपि प्रवृत्तौ अनेकाल्त्वात्सर्वादेशे भवतात् इति सिद्धयति।

ननु यत्र यत्र अनेकाल्त्वात्सर्वादेशस्यप्राप्तिस्तत्र सर्वत्र ङिच्चेत्यस्यापि प्रवृत्तौ सत्यां सर्वत्रानेकाल्त्वात् सर्वादेशे "ङिच्च" इत्यस्य निरवकाशत्वेनापवादत्वात् 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषया "ङिच्च" इत्यनेनान्त्यस्यैव तातङादेशस्य सत्वात् कथमनेकाल्त्वात्सर्वादेश इति चेदत्रोच्यते—अनेकाल्त्वात्सर्वादेश इत्यस्य परत्वादनेकाल्त्वात्सर्वादेश इति तदर्थः। यद्यपि भवद्रीत्या "ङिच्च" इत्ययमपवादस्तथाप्यनन्यार्थङित्वेषु 'सखा' इत्यादौ अनङादिषु चरितार्थं इति युतात्, स्तुतात्, उष्टात्, इत्यादिषु च क्रमेण 'गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतया सम्भवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तोऽपि परेण "अनेकाल्शित्सर्वस्य" इति सूत्रेण बाध्यते तत्र हेतुमाह इहोत्सर्गापवादयोरपि समबलत्वात्। अर्थात् इह तातङ्विषये "अनेकाल्शित्सर्वस्य" इति सामान्यशास्त्रस्य "ङिच्च" इति विशेषशास्त्रस्य च समबलत्वात् सामान्यशास्त्रं विशेषशास्त्रेण न बाध्यत इत्यर्थः। तदुक्तं भाष्ये—ङित्वस्य सावकाशत्वाद्विप्रतिषेधात्तातङ् सर्वादेश इति दिक्।

न्यषेधीत्—न्युपसर्गात् गत्यर्थकात षिध्धातोः "धात्वादेः षः सः" इत्यनेन सत्वे लुङि तिपि अ बन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे—"च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे इवावितौ "आर्धधातुकस्येड्वलादेः" इत्यनेन इटि "अस्तिसिचोऽपृक्ते" इत्यनेन च ईडागमे अनुबन्धलोपे "इट ईटि" इत्यनेन सकारस्यलोपे "अकः सवर्णे दीर्घः" इत्यनेन दीर्घादेशे च कृते अकारेण व्यवहितत्वादिणः परत्वाभावात् "आदेशः

प्रत्यययोः'' इत्यस्याप्रवृत्तौ "प्राक्सितादड्व्यवायेऽपि" इत्यनेन षत्वे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे न्यषेधीत् इति सिद्ध्यति ।

अम्रुचत्—उकारेत्सञ्ज्ञकम्रुचूधातो लुंङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिचि प्राप्ते "जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च" इत्यनेन विकल्पेन च्लेरङि कृते ङित्वाल्लघूपधगुणाभावे अम्रुचत् इति सिद्ध्यति । अङ्-भावे सिचि इचावितौ "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे "इट ईटि" इत्यनेन सलोपे दीर्घे गुणे च कृते अम्रोचीत् इति सिद्ध्यति ।

विस्तम्भते—वि इत्युपसर्गपूर्वात् इकारेत्सञ्ज्ञक ष्टभ् धातोः "धात्वादेः षः सः" इत्यनेन सकारे 'निमित्तापायेन नैमित्तिकस्याप्यपायः' इति परिभाषया टकारस्य तकारे लटि आत्मनेपदे तप्रत्यये इदित्वात् "इदितो नुम् धातोः" इत्यनेन नुमि उमावितौ नकारस्यानुस्वारे "उदः स्थास्तम्भोः पूर्वस्य" इत्यनेन पूर्वसवर्णे "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे विस्तम्भते इति सिद्ध्यति ।

नन्वेवमपि "स्तन्भेः" इति सूत्रेण षत्वं कुतो न स्यादित्यत आह "स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च" इति सूत्रे निर्दिष्टस्यैव प्रतिपदोक्तस्य षत्वविधौ ग्रहणात् ।

नन्वेवं सति "उदः स्थास्तम्भोः पूर्वस्य" इति पूर्वसवर्णविधावपि सौत्रस्यैव ग्रहणं स्यादित्यत आह—तद्बीजन्तु षत्वविधौ सौत्रस्य ग्रहणं पूर्वसवर्णविधौ तु पवर्गीयोपधपाठः "स्तन्भेः" इति 'तवर्गीयोपध पाठश्चेति माधवः' । केचिदस्य टकार औपदेशिक इत्याहुरिति तन्मते विष्टम्भते इति सिद्ध्यति ।

क्षंसीष्ट—ऊकारषकारेत्सञ्ज्ञक क्षम् धातोराशिषि लिङ्लकारे आत्मनेपदे तप्रत्यये "लिङः सीयुट्" इत्यनेन सीयुटि अनुबन्धलोपे "सुट् तिथोः" इत्यनेन सुडागमे अनुबन्धलोपे ऊदित्वात् "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन वैकल्पिके नेडागमे षत्वे ष्टुत्वे च कृते क्षमिषीष्ट इति सिद्ध्यति । इडभावे-मस्यानुस्वारे क्षंसीष्ट इति सिद्ध्यति ।

## २—प्रश्नोत्तराणि

अदक्ष्यति—ऊकारेत्संज्ञक अक्ष धातो लृट्लकारे परस्मैपदे तिप्प्रत्यये अनुबन्धलोपे "स्यतासीलृलुटोः" इति सूत्रेण स्य प्रत्यये अक्ष् स्यतीति "षढोः कः सि" इत्यनेन ककारे कात्परत्वात् सस्य 'आदेशप्रत्यययोः" इत्यनेन षत्वे संयोगे च अदक्ष्यति इति सिद्ध्यति।

प्रविघाटयिता—"घटादयो मितः"इति वक्ष्यमाणसूत्रेण मित्संज्ञा। तत्फलन्तु "मितां ह्रस्वः" इत्यनेन णौ ह्रस्वः, "चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इति दीर्घश्च। ततश्चार्थान्तरवृत्तेरपि घटधातोर्णौ घटादिकार्यं भवत्येव। णौ तदुदाहरणन्तु घटयति—विघटयति। इति। चिण् कृते तु अघटि—अघाटीति रूपम्। णमुलि तु घाटं घाटत् घटं घटमिति रूपम्। अत्र "नित्यवीप्सयोः" इति सूत्रेण द्वित्वम्।

ननु यद्यर्थान्तरवृत्तेरपि घटधातोर्मित्वं स्यात्तदा उद्घाटनम् 'प्रविघाटयिता समुत्पतन्हरिदश्वः कमलाकरानिव' इत्यादि दावपि मित्वात् णौ ह्रस्वापत्तिः स्यादिति चेन्न। चौरादिकस्य 'घट संघाते, इत्यस्माद्धातोः णौ मित्वाभावात् ह्रस्वाभावे 'उद्घाटनम्' प्रविघाटयिता इत्यादिकं निर्बाधमेव सुसंगतं स्यात्।

ननु घटादिगणादन्यत्र अर्थान्तरे पठितानां धातूनामिह घटादिगणनिर्दिष्टस्यैवात्र चेष्टायामर्थे मित्वार्थोऽनुवादः। एवं च विघटयति। इत्यादावर्थान्तरवृत्तौ ण्यन्तस्य कथं मित्वमित्याशङ्क्य तन्निराकरोति। न च तस्यैवार्थविशेषे मित्वार्थोऽनुवाद इति वाच्यम्। तन्न 'अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताः चुरादयो मितो नेत्यर्थः' केन "नान्ये मितोऽहेतौ" इति सूत्रेण तन्निषेधादिति दिक्।

ऊमतुः—१०६ पृष्ठे द्रष्टव्यम्।

अघुक्ष्वहि—ऊकारेत्संज्ञकसंवरणार्थकगुह्धातोर्लुङि आत्मनेपदे उत्तमपुरुषद्विवचनविवक्षायां वहिप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "च्लि लुङि" इत्यनेन च्लौ 'च्लेः सिच्' इत्यनेन सिजादेशे प्राप्ते "शल इगुपधादनिटः क्सः" इत्यनेन क्सादेशे "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इत्यनेन क्सस्य लुकि अजादिप्रत्ययपरत्वाभावात् "ऊदुपधाया गोहः" इत्यस्याप्रवृत्तौ ऊत्वाभावे 'अगुह्वहि' इति रूपं सिध्यति। क्सलुगभावे—ढत्वभष्भावकत्वषत्वेषु कृतेषु अतो दीर्घेच अघुक्षावहि इति रूपं सिद्ध्यति।

ओषीष्ट—शब्दार्थक उष् इत्यस्माद्धातोराशिषि लिङि आत्मनेपदे तप्रत्यये "लिङः सीयुट्" इत्यनेन सीयुडागमेऽनुबन्धलोपे "सुट् तिथोः" इत्यनेन सुटि उटावितौ "पुगन्तलघूपधस्य च" इत्यनेन गुणे षत्वे ष्टुत्वे च कृते ओषीष्ट इति रूपं सिद्ध्यति ।

## ३—प्रश्नोत्तराणि

जुगुप्सांचक्रे——गोपनार्थक गुप् इत्यस्माद्धातोः "गुप्तिज्किद्भ्यः सन्" इत्यनेन सनि नकारस्येत्संज्ञायां लोपे च कृते गुप् स् इति जाते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् धातुत्वाल्लिटि आत्मनेपदे तप्रत्यये "सन्यङोः" इत्यनेन द्वित्वे भ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे "कुहोश्चुः" इत्यनेन चुत्वे "कास्प्रत्ययादाममन्त्रे लिटि" इत्यनेन आमि "आमः" इत्यनेन लिटो लुकि च कृते "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन कृञनुप्रयोगक लिटि प्रयोगे च कृते कृ इत्यस्य द्वित्वे अभ्याससंज्ञायाम् "उरत्" इत्यत्वे "हलादिः शेषः" इत्यनेन लोपे च कृते "कुहोश्चुः" इति चुत्वे मकारस्यानुस्वारे "लिटस्तझयोरेशिरेच्" इत्यनेन एशादेशे यणि जुगुप्सांचक्रे इति सिद्ध्यति ।

पर्यष्वङ्क्त—परि-उपसर्गपूर्वात् ष्वञ्जधातोः "धात्वादेः षः सः" इत्यनेन सकारे स्वञ्जधातो लुङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लिः लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिजादेशे इचावितौ अ स्वञ्ज स त इति स्थिते "झलो झलि" इत्यनेन सिज्लोपे जकारस्य 'चोः कुः' इत्यनेन कुत्वेन गकारे सति 'निमित्तापायेन नैमित्तिकस्याप्यपायः' इति परिभाषया श्चुत्वसम्पन्नञकारस्य नकारे अनुस्वारे परसवर्णे च कृते गकारस्य चर्त्वे "सिवादीनां वाऽड्व्यवायेऽपि" इत्यनेन विकल्पेन षत्वे यणि च कृते पर्यष्वङ्क्त इति सिद्ध्यति ।

ननु प्रत्यष्वङ्क्त इत्यत्र अटा व्यवधानादुपसर्गस्यादिगणः परत्वाभावात् "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्" इत्यनेन षत्वं कथमिति चेदत्राह प्राक्सितादिति षत्वम् । परिनिविभ्यस्तु-सिवादीनां वेति षत्वविकल्पः ।

ननु "प्राक्सितादड्व्यवायेऽपि" इत्यनेन अटाव्यवधाने षत्वविधानेऽपि "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इत्यस्यापि तद्व्यवधाने-

प्रवृत्तिसत्वात् परिनिविभ्यः परस्यापि स्वञ्जेरनेनैव नित्यमेव षत्वं वक्तुमुचितम् । "उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्ज-स्वञ्जाम्" इत्यादि सूत्रे स्वञ्जेः पठितत्वेन स्वञ्जेः प्राक्सितादिति सूत्रविषयत्वादित्येतत्सर्वं पर्यालोच्याह–एतदर्थमेव 'उपसर्गात्सुनोति' इत्येव षत्वे सिद्धे स्तुस्वञ्ज्योः परिनिविभ्य इत्यत्र पुनरुपादानम् "सिवादीनां वाऽड्व्यवायेऽपि" इत्युत्तरसूत्रे षत्वविकल्पविधौ अनुवृत्त्यर्थं पूर्वमेव सम्पद्यते । परिनिभ्यः परस्य स्वञ्जे "सिवादीनां वेति" षत्वविकल्पार्थसूत्रं "परिनिविभ्यः सेव" इत्यत्र स्वञ्जिग्रहणमिति पर्यवस्यतीति दिक् ।

**अयंसिष्टाम्**—उपरमार्थक यम इत्यस्माद्धातोर्लुङि परस्मैपदे तस् प्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्त" इत्यनेनाडागमे "तस्थस्थमिपां तांतंतामः"इत्यनेन तामादेशे "च्लि लुङि"इति च्लौ "च्लेः सिच्"इत्यनेन सिजादेशे इचावितौ अ यम स ताम् इति स्थिते "यमरमनमातां सक्च"इत्यनेन सकि अनुबन्धलोपे "आर्धधातुकस्येड्वलादेः"इत्यनेनेडागमे मकारस्यानुस्वारे षत्वे ष्टुत्वे च अयंसिष्टाम् इति सिद्ध्यति ।

**आध्वम्**—उपवेशनार्थक आस इत्यस्माद्धातोर्लोटि ध्वम् प्रत्यये आस्ध्वमिति जाते–"धि च" इत्यने सलोपे आध्वम् इति सिद्ध्यति ।

**औष्टाम्**—कान्त्यर्थक वश इत्यस्माद्धातोर्लङि परस्मैपदे तस्प्रत्यये–"तस्थस्थामिपां तांतंतामः" इत्यने तामादेशे "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इत्यनेन सम्प्रसारणे अटि प्राप्ते "आडजादीनाम्" इत्यनेन आडागमे "आटश्च" इत्यनेन वृद्धौ "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन षत्वे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे औष्टाम् इति सिद्ध्यति ।

## ४—प्रश्नोत्तराणि

उ०—उकारेत्सञ्ज्ञक—ग्रुच् धातोर्लुङि प्रथमपुरुषैकवचने—अग्रुचत्—अग्रोचीत् इति रूपे ।

**अग्रुचत्**—ग्रुच् इत्यस्माद्धातोर्लुङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "च्लि लुङि" इत्यनेन च्लौ—"जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च" इत्यनेन च्लेरङि सति ङित्वाल्लघूपधगुणाभावे—

अग्रुचत् इति सिद्ध्यति । अङभावे "च्लेः सिच्" इत्यनेन सिचि इचावितौ । "आर्धधातुकस्येड्वलादेः" इत्यनेन इडागमे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे च कृते "इट ईटि" इत्यनेन सलोपे लघूपधगुणे च कृते अग्रोचीत् इति सिद्ध्यति ।

त्रप् धातोर्लिटि प्रथमपुरुषैकवचने 'त्रेपे' इति रूपम् ।

ऊकारषकारेत्संज्ञकत्रपधातोर्लिटि आत्मनेपदे त प्रत्यये "लिटस्तझयोरेशिरेच्"इत्यनेन एशादेशे "लिटि धातोरनभ्यासस्य"इत्यनेन द्वित्वे अभ्याससंज्ञायाम् "तृफलभजत्रपश्च"इति सूत्रेण एत्वे अभ्यासलोपे च कृते त्रेपे इति रूपं सिद्ध्यति ।

कृपेर्लुटि मध्यमपुरुषैकवचने—कल्तासि, कल्पितासे, कल्तासे, इति रूपत्रयं ज्ञेयम् । कल्तासि ऊकारेत्संज्ञक कृप्धातोर्लुटि "लुटि च क्लृपः" इत्यनेन विकल्पेन परस्मैपदे सिपि अनुबन्धलोपे "स्यतासी ऌलुटोः" इत्यनेन तासप्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे च कृते "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन वैकल्पिकेनाडागमे प्राप्ते तम्प्रबाध्य । "तासि च क्लृपः" इत्यनेन नित्यइण्निषेधे "पुगन्तलघूपधस्य च" इत्यनेन गुणे रपरत्वे "कृपो रोलः" इत्यनेन लत्वे च कृते कल्तासि इति रूपं सिद्ध्यति । परस्मैपदाभावपक्षे तु आत्मनेपदे विकल्पेन ऊदिल्लक्षणइडागमे "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे कल्पितासे इति रूपम् । इडभावपक्षे कल्तासे इति रूपं सिद्ध्यति ।

गेत, गासीष्ट—गत्यर्थक ङकारेत्संज्ञकगाधातोर्विधिलिङि गेत इति रूपम् । आशीर्लिङि तु गासीष्ट इति रूपं भविष्यति ।

गेत—गाधातोर्विधिलिङि आत्मनेपदे तादेशे सार्वधातुकसंज्ञायां शपि च कृते गा अ त इति स्थिते । "अकः सवर्णे दीर्घः" इत्यनेन दीर्घे "लिङः सीयुट्" इत्यनेन सीयुडागमे अनुबन्धलोपे "लिङः सलोपोऽनन्त्यस्य" इत्यनेन सलोपे "लोपो व्योर्वलि" इत्यनेन यलोपे "आद्गुणः" इत्यनेन गुणे गेत इति रूपं सिद्ध्यति । आशीर्लिङि तु सीयुटि सुडागमे च कृते षत्वे ष्टुत्वे गासीष्ट इति रूपं सिद्ध्यति ।

जाग्रोर्लङि प्रथमपुरुषैकवचने अजागः इति रूपम्। लुङि तु-'अजागरीत इति रूपं भविष्यति।

अजागः—जागृ इत्यस्माद्धातोर्लङि तिपि अनुबन्धलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेन अडागमे "सार्वधातुकार्धधातुकयोः"इत्यनेन गुणे अजागरत् इति स्थिते "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन तलोपे रेफस्य विसर्गे च कृते अजागः इति रूप सिद्ध्यति।

अजागरीत्—जागृ इत्यस्माद्धातोर्लुङि तिपि अनुबन्धलोपे अडागमे कृते अ जागृत् इति जाते "च्लि लुङि"इत्यनेन च्लौ "च्लेः सिच्"इत्यनेन सिजादेशे इचाविती "आर्धधातुकस्येड्वलादेः"इत्यनेनेडागमे अ जागृ इ स् इत्यवस्थायां यणि प्राप्ते तम्प्रबाध्य "सार्वधातुकार्धधातुकयोः"इत्यनेन गुणे प्राप्ते तं च बाधित्वा सिचि वृद्धौ प्राप्तायां तामपि च बाधित्वा "जाग्रोऽविचिण्णल्ङित्सु"इत्यनेन गुणे कृते ततश्च प्राप्ताया अपि हलन्तलक्षणाया वृद्धेः "नेटि" इत्यनेन निषेधे "अतो हलादेर्लघोः"इत्यनेन प्राप्तां वृद्धिं बाधित्वा "अतोल्रान्तस्य" इत्यनेन प्राप्तायामपि वृद्धौ "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" इत्यनेन निषेधे "अस्तिसिचोऽपृक्ते" इत्यनेन ईडागमे "इट ईटि"इत्यनेन सलोपे सवर्णदीर्घे च कृते अजागरीत् इति रूपं सिद्ध्यति। तदेवोक्तं च मूले-"गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्। पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव।

## ८—प्रश्नोत्तराणि

उ०—"लः कर्मणि च भावे चाकर्मकेभ्यः"इति। तत्र वाक्यद्वयात्मकमिदं सूत्रम्। 'लः कर्मणिचेति' प्रथमं वाक्यम्। तत्र ल इति प्रथमाबहुवचनान्तम्। चकारात् "कर्त्तरि कृत्"इत्यतः कर्त्तरीत्यनुवृत्यते। धातोरिति चाधिकृतम्। तथा च धातोः लकाराः कर्मणि कर्त्तरि च स्युरिति लभ्यते। सकर्मकधातुविषयकमेवेदं वाक्यम्। अकर्मकेषु कर्मणीत्यस्य बाधितत्वात्। तदाह वृत्तौ–'लकाराः सकर्मकेभ्यो धातुभ्यः कर्मणि कर्त्तरि च स्युरिति। एवञ्च—सकर्मकेभ्यः धातुभ्यः भावे लकाराः न भवन्ति। सकर्मकेभ्योऽपि भावलकारप्रवृत्तौ तु-'देवदत्तेन घटं क्रियते' इत्यादौ भावलकारेण कर्मणाऽनभिहितत्वात् द्वितीया स्यादिति भावः।

'भावे चाकर्मकेभ्यः' इति द्वितीयं वाक्यम् । अत्रापि चकारेण कर्त्तैवानुकृष्यते न तु कर्म, असम्भवात् । तदाह अकर्मकेभ्यो भावे कर्त्तरिचेति ।

ननु भावकर्मणोरात्मनेपदविधानात् "शेषात्कर्त्तरिपरस्मैपदम्" इति परस्मैपदविधानाच्च ज्ञापकात्लकाराणां भावकर्मकर्त्तारोऽर्था अनुमातुं शक्यन्त इति किमनेन सूत्रेणेति चेन्मैवम् । असत्यस्मिन्सूत्रे सकर्मकेभ्योऽपि घञादिवद्भावे लकारापत्तौ 'घटं क्रियते देवदत्तेन' इत्यादिप्रयोगः प्रसज्येत । तन्माभूदित्येदर्थं सूत्रस्यावश्यकत्वादिति ।

अथवा—

( क ) सार्वधातुके किमिति—७० पृष्ठे द्रष्टव्यम् ।

( ख ) संज्ञायाः कार्यकालत्वादिति ४२ पृष्ठे द्रष्टव्यम् ।

---

१९३९

३ वर्षे १ पत्रम् ।

१—द्वयस्त्यम् , पैत्रेयम् , अजय्या, खारीकम् , षष्टिकः, ब्राह्मण्यम् , शालेयम् , राजन्वती भूः, कः, ततमः, पाद्यम् , सुखाकरोति । एतेषु अष्टप्रयोगा विशेषसूत्रोपन्यासेन संसाधनीयाः ।

२—प्राकारीयाः इष्टकाः, आढकीना, ऐकागारिकः, अच्छावाकीयम् , द्वितीयकः, वाचाटः, धानकाः, बहुधा,

एतानि रूपाणि सूत्रविग्रहप्रत्ययनिर्देशपूर्वकं संसाध्यन्ताम् ।

३—"पंक्तिविंशति" "न नञ्पूर्वात्तत्पुरुषतात्" "सद्यः परुत्परार्यैषमः" सूत्राणीमानि संपूर्णानि प्रदर्श्य सोदाहरणानि व्याख्यायन्ताम् ।

अथवा—

"न द्व्यचः प्राच्यभरतेषु" अत्र भरतग्रहणप्रयोजनम् , अत्यन्तस्वार्थिक कनि प्रमाणं च प्रदर्श्य "षषष्ठाजादिवचनात्सिद्धम्" इति वार्तिकं सम्यग् व्याख्यायताम् ।

४—"आोडुस्त्रिगर्तषष्ठास्तु कौण्डोपरथदाण्डकी ।

कौष्टकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः"

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्तिविवक्षाया भवन्ति मतुबादयः" उभयोर्कारिकयोर्मध्येऽन्यतरा सम्यक् सप्रयोजनं व्याख्येया।

५—पृथोर्भावः, नासिकायाः नतम्, केशोऽस्यास्ति, इति विग्रहे कतिरूपाणि भवन्ति। कथञ्च तत्सिद्धिः, सम्यक् लिख्यताम्।

## १—प्रश्नोत्तराणि

उ०—श्वस्त्यम्—श्वो भवमित्यर्थे श्वश्शब्दात्–"ऐषमोह्यःश्वसोऽन्यतरस्याम्" इत्यनेन विकल्पेन त्यपि अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे श्वस्त्यम् इति सिद्धयति। पक्षे वक्ष्यमाणौ ट्युट्युलौ श्वस्तनम् इति। श्वस् इत्यव्ययात् जातार्थे "श्वसस्तुट् च" इत्यनेन ठञि इकादेशे तुडागमे "द्वारादीनां च" इत्यनेन ऐजागमे 'शौवस्तिकम्' इति रूपं सिद्धयति।

ऐणेयम्—एण्या अवयवो विकारो वेत्यर्थे एणीशब्दात् "एण्या ढञ्" इति सूत्रेण ढञि "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण ढस्य एयादेशे आदिवृद्धौ "यचि भम्" इत्यनेन भसंज्ञायाम् "यस्येति च" इत्यनेनेकारलोपे प्रातिपदिकत्वात्सौ सोरमादेशे ऐणेयम् इति सि यति।

अजथ्या—अजेभ्यः आजाभ्यो वा हिता इत्यर्थे अजशब्दात् "अजाविभ्यां थ्यन्" इत्यनेन थ्यन्प्रत्ययेऽनुबन्धलोपे "अजाद्यतष्टाप्" इत्यनेन टापि च—अजथ्या इति सिद्धयति। अजाशब्दात् थ्यनि तु तसिलादित्वादजाशब्दस्य पुंवद्भावे विशेषः। स्त्रीत्वं तु लोकात्।

खारीकम्—खार्याः परिमाणमस्येति विग्रहे "केवलायाश्चेति वक्तव्यम्" इति वार्तिकबलात् "खार्या ईकन्" इति सूत्रेण ईकन्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे खारीकम् इति सिद्धयति।

षष्टिकः—षष्टिरात्रेण पच्यन्त इति विग्रहे "षष्टिकाः षष्टिरात्रेण पच्यन्ते" इति सूत्रेण कन्प्रत्यये निपातनात् रात्रशब्दस्य लोपे च कृते प्रातिपादिकत्वात्सौ रुत्वे विसर्गे च कृते षष्टिकः इति सिद्धयति।

ब्राह्मण्यम्—ब्राह्मणानां समूह इति विग्रहे "ब्राह्मणमाणववाडवाद्यन्" इति सूत्रेण यन् प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ सोरमादेशे ब्राह्मण्यम् इति सिद्धयति।

राजन्वती भूः—सुशोभनो राजा यस्य देशस्य सः सुराजा तस्य भावः सौराज्यम्। तस्मिन्नर्थे राजन् शब्दात् "राजन्वान्सौराज्ये" इति सूत्रेण निपातनात् मतुप्प्रत्यये अनुबन्धलोपे निपातनान्नलोपाभावे च कृते "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इत्यनेन मस्य वत्वे ङीपि च कृते राजन्वती भूः इति सिद्ध्यति।

क्व—कस्मिन्निति विग्रहे सप्तम्यन्तात् किम् शब्दात् "किमोऽत्" इत्यनेन अत्प्रत्यये तकारस्येत्संज्ञायां लोपे च ते "क्वाति" इत्यनेन क्वादेशे क्व इति सिद्ध्यति।

## २—प्रश्नोत्तराणि

उ०—प्राकारीयाः—प्राकारः आसामिष्टकानां स्यादिति विग्रहे प्रथमान्ताद् प्राकारशब्दात् छप्रत्ययो भवतीत्यर्थकेन "तदस्य तदस्मिन्स्यादिति" इति सूत्रेण छप्रत्यये ईयादेशे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते प्राकारीयाः इष्टकाः इति सिद्ध्यति।

आढकीना—आढकं सम्भवति अवहरति पचति वेति विग्रहे "आढकाचितपात्रात्खोऽन्यतरस्याम्" इत्यनेन विकल्पेन खप्रत्यये तस्य इनादेशे टापि च कृते आढकीना इति सिद्ध्यति। पक्षे ठञि कृते तु ठस्येकादेशे ङीपि च कृते आढकिकी इति सिद्ध्यति।

ऐकागारिकः—एकमसहायमगारं प्रयोजनमस्य मुमुषिषोरिति विग्रहे एकागारशब्दात् "ऐकागारिकट् चौरे" इत्यनेन निपातनादिकट् प्रत्यये आदिवृद्धौ च कृते प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च ऐकागारिकः चौरः इति सिद्ध्यति।

अच्छावाकीयम्—अच्छावाकशब्दोऽस्मिन्नस्तीति विग्रहे "मतौ छः सूक्तसाम्नोः" इत्यनेन मत्वर्थे छप्रत्यये तस्येयादेशे प्रादिपदिकत्वात्सौ सोरमादेशे अच्छावाकीयम् इति सिद्ध्यति।

द्वितीयकम्—द्वयोः पूरण इति विग्रहे "द्वेस्तीयः" इत्यनेन तीयप्रत्यये निष्पन्नाद् द्वितीयशब्दात् द्वितीयेन रूपेण ग्रहणमिति विग्रहे "तावतिथं ग्रहणमिति लुग्वा" इत्यनेन विकल्पेन पूरणप्रत्ययस्य तीय इत्यस्य लोपे प्रातिपदिकत्वात्सौ सोरमादेशे द्विकम् इति सिद्ध्यति। लोपाभावे तु द्वितीयकम् इति सिद्ध्यति।

वाचाटः—कुत्सितं बहुभाषते इति विग्रहे वाचशब्दान्मत्वर्थे "आलजाटचौ बहुभाषिणि" इत्यनेन आटच्प्रत्यये अनुबन्धलोपे प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते वाचाटः इति सिद्ध्यति ।

धानकाः—धानाशब्दात् अनुकम्पायुक्तार्थाभिधायिनः स्वार्थे कः स्यादित्यर्थकेन "नीतौ च तद्युक्तात्" इति सूत्रेण कप्रत्यये "केऽणः" इत्यनेन ह्रस्वे टापि च कृते "आभाषितपुंस्काच्च" इत्यनेन विकल्पेन इत्वाभावे प्रातिपदिकसंज्ञायां जसि जकारस्येत्संज्ञायां लोपे च कृते सकारस्य रुत्वे विसर्गे च कृते "धानकाः" इति सिद्ध्यति ।

बहुधा—बहुकृत्वो वा दिवसस्य भुङ्क्ते अविप्रकृष्टकालिकक्रियाजन्मगणनवृत्ते बहुशब्दात् "विभाषा बहोर्धाऽविप्रकृष्टकाले" इत्यनेन धाप्रत्यये बहुधा इति सिद्ध्यति । पक्षे कृत्वसुचि—बहुकृत्वः इति सिद्ध्यति ।

## ३—प्रश्नोत्तराणि

उ०—"पंक्तिविंशतीति"—१२ पृष्ठे द्रष्टव्यम् ।

ननञ्पूर्वादीति—८६ पृष्ठे द्रष्टव्यम् ।

सद्यः परुदिति—७४ पृष्ठे द्रष्टव्यम् ।

## ४—प्रश्नोत्तराणि

"दामन्यादित्रिगर्तषष्ठाच्छः" इति सूत्रेण 'दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छप्रत्ययो भवति' इत्यर्थेन त्रिगर्तषष्ठात् छप्रत्ययो विधीयते । आयुधजीविनां हि षड्वर्गाः, तत्र षष्ठस्त्रिगर्तः वर्गः, तेभ्यः षड्वर्गेभ्य इति यावत् । के ते त्रिगर्तषष्ठा इत्यत आह 'आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी । क्रौष्टुकिर्जालमानिश्च ब्राह्मगुप्तोऽथ जालकिः । अस्यायम्भावः—कौण्डोपरथश्च, दाण्डकिः, क्रौष्टुकिः, जालमानिः, ब्राह्मगुप्तः, जालकिः, इत्येतान् त्रिगर्तषष्ठान् आहुरित्यर्थः । त्रिगर्तषष्ठानामुदाहरणसूचनमिदम् "कौण्डोपरथीय" इति कौण्डोपरथशब्दात्स्वार्थे छे प्रत्यये कौण्डोपरथीय इति सिद्ध्यति ।

भूमनिन्दाप्रशंसास्विति—१३६ पृष्ठे द्रष्टव्यम् ।

## ५—प्रश्नोत्तराणि

उ०—पृथोर्भाव इति विग्रहे प्रथिमा, पार्थवमिति रूपद्वयम् । तत्र

प्रथिमेत्यत्र 'पृथुशब्दात् पृथ्वादिभ्यः षष्ठ्यन्तेभ्यः भावे इमनिज् वा स्यात्' इत्यर्थेन "पृथ्वादिभ्य इमनिज्वा" इत्यनेन विकल्पेन इमनिच् प्रत्यये चकारस्येत्संज्ञायां लोपे च कृते ऋकारस्य रकारे, उकारस्य रकारे, उकारस्य गुणं बाधित्वाटे-लोपे प्रथिमा इति सिद्ध्यति । इमनिजभावे "इगन्ताच्चलघुपूर्वात्" इत्यणि पार्थवम् इति रूपं सिद्ध्यति ।

नासिकाया नतेऽभिधेये–चिकिनम्, चिपिटम्, चिक्कम्, इति रूपत्रयम् ।

चिकिनम्—७२ पृष्ठे द्रष्टव्यम् ।

चिपिटम्—कप्रत्यये चिकादेशे च कृते चिक्कम् इति रूपञ्च तद्वदेव बोध्यम् ।

केशोऽस्यास्तीति विग्रहे—केशवः, केशी, केशिकः, केशवान्, इति रूपचतुष्टयम् । तत्र केशशब्दात् "केशाद्वोऽन्यतरस्याम्" इत्यनेन वप्रत्यये केशवः इति सिद्ध्यति । इनि प्रत्यये तु केशी इति, ठनि तु केशिकः इति मतुपि प्रत्यये कृते केशवान् इति रूपं सि ध्यति ।

---

१९३९

३ वर्षे २ पत्रम् ।

१—भविता, भवेयुः, एधामास, अनुस्वदते, एतेषां साधनप्रकाराः प्रदर्शनीयाः ।

अथवा—

"एकाच् उपदेशेऽनुदात्तात्" इति सूत्रस्योदाहरणप्रदर्शनपूर्वकं मूलोक्तमेकाच् पदस्य प्रयोजनं लेख्यम् ।

२—ऊखतुः, विव्यतुः, उत्तम्भते, पणायति, एतेषां विशदं साधुत्वं वर्णयत ।

अथवा—

"संज्ञायाः कार्यकालत्वादिति फक्किका व्याख्यायताम् ।

३—अष्टा, स्यन्त्स्यति, अपयति, परिसोढा, मीमांसते, इमानि धातु-प्रत्ययप्रदर्शनपुरस्सरं साधनीयानि ।

४—ऊवतुः, जत्ततुः, चक्शौ, यूयात्, ऊर्णुनाव, एते प्रयोगाः साधनीयाः ।
५—अभ्यष्टौत्, विदाङ्कुरु, सुषुषुपतुः, दिध्ये, सन्ति, इमे प्रयोगाः साधनीयाः ।

## १—प्रश्नोत्तराणि

उ०—भविता—७५ पृष्ठे द्रष्टव्यम् ।

भवेयुः—८९ पृष्ठे द्रष्टव्यम् ।

एधामास—एधधातोर्लिटि "इजादेश्च गुरुमतोऽनृच्छः" इत्यनेन आ-म्प्रत्यये, 'आमोमकारस्य नेत्वम् । आस्कासोराम्विधानाज्ज्ञापकात्' । ततः—"आमः" इत्यनेन लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इति सूत्रेण कृञिति प्रत्याहाराश्रयणात् असित्यनुप्रयोगकलिट्प्रयोगे परस्मैपदसंज्ञायाम् तिपि तिपो-णलि च कृते अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे अभ्या-ससंज्ञायाम्—"अत आदेः" इत्यनेन दीर्घे एधामास इति सिद्धयति ।

अनुस्वदते—आस्वदनार्थक अनु उपसर्गपूर्वकात् ष्वद् धातोः "धात्वादेः षः सः" इत्यनेन षकारस्य सकारे आत्मनेपदे लट्लकारे तप्रत्यये "तिङ्शित्सा-र्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि शपा-पितौ "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे ततः उपसर्गात्परस्य सकारस्य षत्वे प्राप्ते "स्वात्पदाद्योः" इत्यनेन निषेधे अनुस्वदते इति सिद्धयति ।

## २—प्रश्नोत्तराणि

उ०—ऊवतुः—४० पृष्ठे द्रष्टव्यम् ।

विव्यतुः—८ पृष्ठे द्रष्टव्यम् ।

उत्तम्भते—१३९ पृष्ठे द्रष्टव्यम् ।

पणायति—"पणव्यवहारे स्तुतौ च" ततः "पन च" इति योगविभागः । तत्र "पन च" इत्युत्तरयोगे योगविभागात् स्तुतावित्येव सम्बद्धयते । पनिसाह-चर्यात् पणेरपि स्तुतावेवाय्प्रत्ययः । व्यवहारे तु पणते, पेणे इत्यादि । अत्र स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तादप्यात्मनेपदम् । तथा च पण-धातोर्लटि "गुपूधूपविच्छिपणिपनिभ्य आयः" इत्यनेन आय्प्रत्यते "सना-द्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् धातुत्वाल्लटि परस्मैपदे तिपि अनु-बन्धलोपे पणायति इति सिद्धयति ।

अथवा—

संज्ञायाः कार्यकालत्वादिति—४२ पृष्ठे द्रष्टव्यम् ।

## ३—प्रश्नोत्तराणि

उ०—अष्टा—व्याप्त्यर्थक–ऊकारेत्संज्ञक् अश् इत्यस्माद्धातो लुटि–तिपि–अनुबन्धलोपे च कृते "स्यतासी लृलुटोः" इत्यनेन तास्प्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन डाइत्यादेशे अनुबन्धलोपे "स्वरतिसूतिसूयतिधूञूदितो वा" इत्यनेन विकल्पेन इडागमे अशिता इति सिद्ध्यति । इडभावे तु "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यनेन षत्वे ष्टुत्वे च कृते अष्टा इति सिद्ध्यति ।

स्यन्त्स्यति—४१ पृष्ठे द्रष्टव्यम् ।

अपयति—अत्र "लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य"—"लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषाभ्यां श्रापाके 'श्रै' इति कृतात्वस्य श्रा इत्यादादिकस्य च सामान्येनानुकरणम् । तथा च श्रा धातोर्णिचि अनुबन्धलोपे "अर्ति ह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ" इत्यनेन पुगागमे "णौ चङ्युपधायाः ह्रस्वः" इत्यनेन ह्रस्वे "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लट्लकारे तिपि सार्वधातुकसंज्ञायां शपि च कृते "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽयादेशे च अपयति इति सिद्ध्यति ।

पूर्वोक्तपरिभाषायां मानन्तु—"स्वरतिसूतिसूयतिधूञूदितो वा" इति सूत्रे सूङ इति पठितेऽपि द्वयोर्ग्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं व्यर्थं सदिमां परिभाषां ज्ञापयति । लक्षणप्रतिपदोक्तपरिभाषा तु न्यायसिद्धा लाक्षणिकं हि विलम्बोपस्थितिकम्, प्रतिपदोक्तं तु शीघ्रोपस्थितिकम् । यद्यप्युक्तपरिभाषयोः परस्परविरोधेनाप्रवृत्तावपीष्टं सिद्ध्यति, तथाप्यविशेषादुभयोः प्रवृत्तिरप्यत्र युक्तैवेति दिक् ।

परिसोढा—५२ पृष्ठे द्रष्टव्यम् ।

मीमांसते—पूजार्थक मान् इत्यस्मात् "मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य" इति । सन्प्रत्यये मानादीनामभ्यास्येकारस्य दीर्घे च कृते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायाम् "सन्यङोः" इत्यनेन द्वित्वे अभ्यासर्स-

ज्ञायाम्—"हलादिः शेषः" इत्यनेन लोपे च कृते नकारस्यानुस्वारे धातोरित्यविहितत्वात्सनोऽत्र आर्धधातुकत्वाभावेन इड्गुणयोरभावे धातुत्वाल्लटि आत्मनेपदे तप्रत्यये "टित आत्मनेपदानां टेरे" इत्यनेन एत्वे "मीमांसते" इति सिद्धयति।

## ४—प्रश्नोत्तराणि

उ०—ऊवतुः—५० पृष्ठे द्रष्टव्यम्।

जक्षतुः—८ पृष्ठे द्रष्टव्यम्।

चक्शौ—ङकारेत्संज्ञक चक्षिधातोर्लिटि तिपि णलि च कृते अत्र इकारोऽनुदात्तो नुजर्थः। इदित्वान्नुमि तु न अन्तेदित इति व्याख्यानात् ङकारस्तु अनुदात्तेत्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः। ततश्च "चक्षिङः ख्याञ्" "वा लिटि" इति सूत्राभ्यां ख्याञादेशे ञित्वात् "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यनेन आत्मनेपदे परस्मैपदे च कृते अत्र भाष्ये 'रुशादिरयमादेशः" असिद्धकाण्डे शस्य यो वेति स्थितम्। तेन रुशादेशपक्षे शस्य यकारे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे अभ्याससंज्ञायाम् "हलादिः शेषः" इत्यनेन लोपे च कृते "ह्रस्वः" इत्यनेन ह्रस्वे "अभ्यासे चर्च" इत्यनेन चर्त्वे "कुहोश्चुः" इत्यनेन चुत्वे "आत औ णलः" इत्यनेन औकारादेशे अत्र "चयो द्वितीया शरिपौष्करसादेरिति वाच्यम्" इति न। प्रवर्त्तते, चर्त्वस्यासिद्धत्वात् ततः "चक्शौ" इति रूपं सिद्धयति।

यूयात्—६ पृष्ठे द्रष्टव्यम्।

ऊर्णुनाव—१८ पृष्ठे द्रष्टव्यम्।

## ५—प्रश्नोत्तराणि

उ०—अभ्यष्टौत्—स्तुत्यर्थक अभि इत्युपसर्गपूर्वकात् ष्टुञ्धातोः ञकारस्येत्संज्ञायां लोपे च कृते "धात्वादेः षः सः" इत्यनेन सकारे—"निमित्तापाये नैमित्तिकस्याप्यपायः" इति परिभाषया टकारस्य तकारे जाते स्तु इत्यस्माल्लङि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि च कृते "अदिप्रभृतिभ्यः शपः" इत्यनेन शपो लुकि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमे "उतो वृद्धिर्लु-

कि हलि'' इत्यनेन वृद्धौ "प्राक्सितादड्व्यवायेऽपि" इत्यनेन षत्वे ष्टुत्वे च कृते अभ्यष्ठौत् इति सिद्ध्यति ।

विदाङ्कुरु—८२ पृष्ठे द्रष्टव्यम् ।

सुषुषुपतुः—९ पृष्ठे द्रष्टव्यम् ।

दिद्ध्ये—दीप्तिदेवनार्थकदीधी इत्यस्माद्धातोर्लिटि आत्मनेपदे तप्रत्यये ततः "यीवर्णयोर्दीधीवेव्योः" इत्यनेनान्त्यस्य ईकारस्य लोपे प्राप्ते किन्तु लोपं बाधित्वा नित्यत्वाद्धैरत्वे "एरनेकाचोऽसंयोगपूर्वस्य" इत्यनेनयणि च कृते 'दिद्ध्ये' इति रूपं सिद्ध्यति ।

सन्ति—स्वप्नार्थकइकारेत्संज्ञक अस् इत्यस्माद्धातो लेटि तिपि इदित्वान्नुमि सन् स् त् इति स्थिते "स्कोः संयोगाद्योरन्ते च" इत्यनेन सलोपे "झरो झरि सवर्णे" इत्यनेन विकल्पेन तलोपे "तिङ्शित्सार्वधातुकम्" इत्यनेन सार्वधातुकसंज्ञायाम् "कर्त्तरि शप्" इत्यनेन शपि "अदिप्रभृतिभ्यः शपः" इत्यनेन शपो लुकि च कृते सन्ति इति सिद्ध्यति ।

"महर्षिशाण्डिल्यकुले प्रजातो, विद्वद्वरेण्यः ( श्री ) 'छबिनाथ' नाथः ।
निधाय विश्वेशपदे स्वकीर्तिं, छात्रालभन्तामनया समीहितान् ॥

---

प्राप्तिस्थानम्—
चौखम्बा संस्कृत पुस्तकालय,
बनारस सिटी ।

॥ श्रीः ॥

# अथ व्याकरणमध्यमतृतीयखण्डे प्रश्नाः

१६०० । १ पत्रम् ।

१—आङ्कः, कालापाः, कौपिञ्जलः, चातुर्वैद्यः, याथाकथाचम्, एतानि प्राप्तिप्रदर्शनपुरो लेख्यानि ।

२—दशैकादशिकः, द्विशौर्पिकम्, कथमेते ? तद्धरतीत्यस्य कीदृशोऽर्थः, किमुदाहरणञ्च तत्प्रदर्शय ।

३—समांसमीना, द्विमयम्, परस्परम्, कथमेतानि ?

४—शर्कराशब्दान्मत्वर्थीये कानि कानि रूपाणि चातुरर्थिकापेक्षया कश्चात्रविशेषः ।

५—चतुर्थ्यादनजादौ चेति कारिका व्याख्येया ।

२ पत्रम् ।

१—आनृजे, अध्यापिपत्, धिनु, अलावीत्, एतानि रूपाणि कथं सिध्यन्ति ।

२—क्र्यादीनां चतुर्णां ग्रहणस्य नियमार्थत्वमुपपाद्य नियमाकारः स्पष्टमुपपादनीयः ।

३—धेट् धातोः श्विधातोश्च लुङि तिपि कति रूपाणि भवन्ति ।

४—उषधातोर्लिटि द्युत्धातोर्लुङि, कृपधातोर्लिटि प्रथमैकवचने कीदृशानि रूपाणि भवन्ति ।

५—अगात्, अद्युतत्, अध्यगीष्ट, अवधीत्, इमानि कथं सिद्ध्यन्ति ।

१६०१ । १ पत्रम् ।

१—पूर्ववार्षिकः, पौर्ववार्षिकः, लक्ष्मणः, तैर्थकः, शौवस्तिकम्, पौर्वार्धिकम्, पूर्वार्ध्यम्, कथं सिद्धिर्जायते ।

२—आयोमुखीयः, शातभिषजः, औपकर्णिकः, दाशरथिः, इमे कथं सिद्ध्यन्ति ।

३—प्रास्थिकं क्षेत्रम्, आर्त्विजीनो यजमानः, सिद्धिप्रकारो लेख्यः ।

४—हृदयं यस्यास्तीति विग्रहे कति रूपाणि कथञ्चसिद्धिः ।

५—द्वे वर्षे भूत इति विग्रहे कति रूपाणि कथञ्च सिद्धिः ?

६—सर्वपथीनः, आश्वीनोऽध्वा, अश्वपड्गवम्, उष्णिका यवागूः, इमे कथं सिद्ध्यन्ति ।

७—कक्षीवान्, अर्वाचीनम्, अनयोः कथं सिद्धिः ।

८—पद्धपद्वी, अन्योऽन्यम्, इमे ब्राह्मण्यौ, अनयोः साधनं विधेयम् ।

९—बहुशो ददात्यनिष्टेषु, अल्पशो ददाति आभ्युदयिकेषु, अनयोः साधुत्वमुच्यताम् ।

## २ पत्रम् ।

१—भूधातोरेधधातोश्च लुङि प्रथमैकवचने कीदृशानि रूपाणि भवन्ति । ऊर्दते, अच्युतत्, आनृजे, विवाय, अकटीत्, तिप्सीष्ट, गोपायिता, एषां सिद्धिर्लेख्या ।

२—संज्ञायाः कार्यकालत्वात् इति कारिका व्याख्येया ।

३—अप्यायि, जिगाय, धिन्वः, अघृक्षाताम्, दिद्युते, एषां साधनं कार्यम् ।

४—कल्हासि, ववमतुः, परिसोढा, अमृत, अदर्शत्, ऊयतुः, अश्वत्, साधनं विधेयम् ।

५—अख्यत्, शेरते, ऊर्णोति, सिद्धिः कार्या ।

६—अध्यगीष्ट, विदाङ्कुरु, अजागः, अजागरीत्, सिद्धिः कार्या ।

७—अद्धातोः सर्वाणि रूपाणि प्रदर्शनीयानि ।

## १९०२ । १ पत्रम् ।

१—ऐणीपचनः, शौवस्तिकम्, पूर्वैषुकामशमः, हौतृकम्, पीलुमूलतः, काकोलूकिका एते कथं सिद्ध्यन्ति ।

२—शीर्षण्यः, आर्धद्रौणिकम्, द्विनैष्किकम्, द्व्याढकी, आयथातथ्यम्, याचितकम्, कौक्कुटिकः, यावतिथः, गरिष्ठः, कथं सिद्ध्यन्ति ।

३—शेवलिकः, द्वितीयकम्, द्विकम्, व्याकरणकः, एषां सिद्धिः कार्या ।

४—शिवः, सुरकः, वाचिकम्, ब्रह्मीभवति, विरजीकरोति, एषां साधनं कार्यम् ।

५—चक्रीवान्, लक्ष्मणः, ऐपमः, एतानि संसाध्य संस्कृताः सिकता यस्मिन्देशे सन्तीति विग्रहे कति रूपाणि भवन्ति ।

६—दलद्वये टाबभाव इति कारिका व्याख्यायतां सोदाहरणीया ।

## २ पत्रम् ।

१—अभूत्, एधिषीष्ट, अग्लुचत् एते कथं सिद्ध्यन्ति ।

२—अयधातोर्लिटि, गुप्धातोर्लुङि, सन्धातोराशीर्लिङि च कीदृशानि रूपाणि भवन्ति ।

३—जिगाय, धिन्वः, धिनुवः, गाढा, शृणु, अघासीत्, आरतुः, अदित, तितिक्षते कथमेते सिद्ध्यन्ति ।

४—ऊर्णुधातोर्लुङि, इङ्धातोर्लुङि विद्धातोर्लिटि लङि च प्रथमपुरुषैकवचने कीदृशानि रूपाणि जायन्ते सशास्त्रं लेख्यानि ।

५—एधि, अजागरीत्, अघसत्, जहि, एषां साधनं कार्यम् ।

६—अचकाः, अचकात्, अशिषत्, दीध्ये, इमानि रूपाणि साधनीयानि ।

## १९०३ । १ पत्रम् ।

१—जम्वाः फलमिति विग्रहे कति रूपाणि कथञ्च तत्सिद्धिः ।
२—दशैकादशिकी, वैभाजित्रम्, द्वादशान्तिकः, एषां सिद्धिप्रकारो विग्रहश्च प्रदर्शनीयः ।
३—स्थौलशीर्षम्, विश्वजनीनम्, प्राकारीया इष्टिकाः, एषां साधुत्वं ब्रूत ।
४—सुगन्ध्यम्, द्विनिष्कम्, द्विनैष्किकम्, एतानि साधनीयानि ।
५—सिकताः सन्ति अस्मिन्देशे इति विग्रहे कति रूपाणि भवन्ति तानि साधनीयानि ।
६—अनुकम्पितो देवदत्त इति विग्रहे कति रूपाणि भवन्ति कथञ्च तत्सिद्धिः ।
७—लोहितध्वजाः, शालावत्यः, सुरकः, आशितङ्गवीनमरण्यम्, एतानि साधयत ।
८—देवा अर्जुनतोऽभवन्, विप्रत्राकरोति, सपत्राकरोति, सिद्धिः कार्या ।

## २ पत्रम् ।

१—क्रादीनां ग्रहणस्य नियमार्थत्वमुपपाद्यताम् ?
२—पणधातोर्लिटि प्रथमपुरुषैकवचने स्तुतौ व्यवहारे च कानि रूपाणि कथं तत्सिद्धिः।
३—अयतत, परिसोढा, निषसाद, अगूढ, इमे प्रयोगाः साध्याः ।
४—जुगुप्सते, ईजतुः, अवोढम्, इमे साध्याः ।
५—ईडिध्वम्, सुवै, आत्थ, मृडिढ्, अरोदः, सुष्वाप, एधि, इमानि साधनीयानि ।
६—प्रतिषीदति, विपसाद, परिषोढा, चालयति शाखाम्, प्रत्रानयति, क्राथय ति, एतेषां साध्वसाधुत्वं प्रदर्शनीयम् ।

## १९०४ । १ पत्रम् ।

१—कास्तीरिकी, साङ्काश्यकः, पूर्ववार्षिकः, चातुर्होतृकः, प्रास्तारिकः, पद्यः, कर्दमः, प्राकारीया इष्टिकाः एषां सिद्धिः कार्या ।
२—वर्षस्याभविष्यतीति विग्रहे वृद्धिरिष्टा भूतार्थे भवति नवेति सहेतुकमुच्यताम् ।
३—सार्ववेद्यः, शैष्योपाध्यायिका, द्विमयमुदश्वित्त्यवानाम्, दाण्डाजिनिकः, मुनीवती, इमानि साधनीयानि ।
४—सिकताः सन्ति अस्मिन्देशे इत्यर्थे कति रूपाणि कथञ्च सिद्धिः ।
५—अतोऽत्राधीमहे अतो न गन्ताः स्मः अत्र को विशेषः ।
६—दलद्वये टाबभाव इति कारिका व्याख्येया । द्वन्दमिति रूपे किं निपात्यते ।

## २ पत्रम् ।

१ —अभूवन्, श्रेपे, मा भवानतीत्, आनर्च, सिद्धिः कार्या ।
२ —प्रस्तुम्पति गौः, पणते, चक्षण्महे, अचीकमत साध्यानि ।

३—'कमलवनोद्घाटनम्' अत्र शङ्कासमाधानं निरूप्यताम् ।

४—अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्, अश्वयीत्, अरोदीत्, अरोदत्, कथमेते सिद्ध्यन्ति ।

५—जागृधातोर्लुङि प्रथमपुरुषैकवचने प्रक्रियां निरूप्य सिद्धरूपमुच्यताम् ।

## १९०५ । १ पत्रम् ।

१—राजशब्दस्य श्वशब्दस्य च शैषिकेषु कानि रूपाणि भवन्ति। कथञ्च तत्सिद्धिः।

२—दाक्षिकर्षुकः, पूर्वपाञ्चालकः, अद्रपादः. षात्वणविकः, शालातुरीयः, वासुदेवकः, कौपिञ्जलः, एते कथं सिद्ध्यन्ति ।

३—कांस्यम्, वैशसम्, शीर्षण्यः, विश्वजनीनम्, पौरुषेयः, एतानि रूपाणि साध्यन्ताम् ।

४—द्विशौर्पिकम्, द्विप्रतिकम्, वैरङ्गिकः, ह्यस्त्यम् हैयङ्गवीनम्, एते कथं सिद्ध्यन्ति

५—नासिकाया नते किं किं रूपं कथञ्चेत्युक्त्वा काकतालीयः, परस्परम्, इति रूपे साधनीये ।

## २ पत्रम् ।

१—एधिषीष्ठाः, विव्यतुः, सायात्, अक्रमीत्, ष्ठीवति, इमानि साध्यानि ।

२—ववोपिथ, अवोचत्, साध्ये इमे ? ।

३—अकल्प्स्यत्, श्रपयति, सस्वरिव, दिग्ये । साध्यानि ।

४—परिषस्वजे, पर्यष्वङ्क्त, अद्राक्षीत्, विव्ययिथ, साधनीयानि ।

५—एधि, अध्यगीष्ट, सुप्सुपुः, अशात्, इमानि साध्यानि ।

६—ऊर्णोतेस्थलि किं किं रूपं कथञ्च ।

७—सार्वधातुके किं चिकीर्ष्यात्, परस्वाश्लिस्यत्वाञ्च अतो येय इति निरूपयत ।

## १९०६ । ३ वर्ष १ पत्रम् ।

१—युष्मदस्मदोः शैषिके कानि कानि रूपाणि कथञ्च तत्सिद्धिः ।

२—कान्थिकम्, निष्ठ्यः, भवदीयः, दार्त्योहम्, पूर्वाह्णतनम्, साध्यानि ।

३—शातभिषजः, दासिष्ठिकः, पिञ्यम्, वैदूर्यः, छागलेयिनः । साध्या इमे ।

४—सामिधेनी, शामीलम्, पारशवः, समांसमीना इमानि साध्यानि ।

५—आचार्यभोगीनः, औपानह्यं चर्म, इमे साध्ये ।

६—दलद्वये टाबभाव इति कारिका सोदाहरणा व्याख्येया ।

## २ पत्रम् ।

१—बभूविथ, ऊखतुः, चक्षण्महे, तेरिथ, इमानि साध्यानि ।

२—विद्योतयति, प्रवनयति, लडयति, धिनोति, साध्यानि ।

३—इण्, श्विं, धेट धातूनां लुङि तिपि कानि कानि रूपाणि कथञ्च तत्सिद्धिः ।

४—षोपदेशकारिका व्याख्यायताम्।
५—विव्यथिथ, यूयात्, जहि, अशिषत्, साध्यानि।
६—अजागरीदित्युपसर्गापवादकार्योपदर्शनेन साध्यताम्।

१९०७। १ पत्रम्।

१—औपनिषदः, दूरेत्यः, तावकीनः, द्वैपिकः, वैशसम्, माहाराजिकः। एषां सविग्रहं सिद्धिं प्रदर्शयत।
२—चतुर्थीदनजादौ चेति कारिका व्याख्यायताम्।
३—द्विवर्षीणः, पञ्चमः, स्वत्तः, विश्वजनीनम्, द्विशतकम्, इमानि साध्यानि।
४—धानुष्कः, धन्यः, वैवधिकः, तुरीयः, शालातुरीयः, इमे साध्याः।

२ पत्रम्।

५—गतगता, यथायथम्, देवता, हैयङ्गवीनम्, काकतालीयः। एते सम्यक् साध्याः।
१—बभूविथ, पस्पर्धे, देधे, एधाञ्चकृषे, परिलोढा। साध्या एते।
२—अजधातोर्लिटि एकवचनद्विवचनयोः सर्वाणि रूपाणि सनियमं निरूपयत।
३—शेरते, ऊर्णुनुविथ, यन्ति, अचकाः, इमे प्रयोगाः साध्याः।
४—आतीत्, गर्हते, अश्नत, अदधात्, इमे प्रयोगाः सम्यक् संसाध्य प्रदर्शनीयाः।

१९०८। १ पत्रम्।

१—काशीयाः, दाक्षिकर्षुकः, माह्लवास्तवः, पौर्वाधिकाः, पूर्वाह्णतनम्, अपरहैमनः, सुपाञ्चालकः। इमे साध्याः।
२—श्रविष्ठः, भद्रपादः, वासिष्ठकः, औपनिषदः, वैदूर्यः, अश्मरथः कल्पः, शामीलम्।
३—नैयग्रोधम्, शौवापदम्, दशैकादशिकः, वैशसम्, सार्वजनीनः, अध्यर्धप्रतिकम्, सार्वभौमः। साध्या एते।
४—पुरुषाद्वधविकारस्येत्युदाहरणानि प्राप्तिपुरस्सरं देयानि।
५—द्वैसमिकः, अपटुत्वम्, इमान्, द्विमयम्, द्विकम्, विगुणः, एतर्हि, काकतालीयः, सकृत्, प्रीणम्, मापशः, अग्निसाद्भवति परम्पराम्, तत्तत्सूत्रतदर्थप्रदर्शनमुखेनैतानि रूपाणि साधु साधनीयानि।

२ पत्रम्।

१—भवतादित्यत्रापवादभूतस्यापि ङिच्चेत्यस्य कथमुत्सर्गेण बाधो दर्शितः तत्सङ्गतार्थतां प्रदर्शयत।
२—ऊखतुः, विव्यतुः, दधतुः, एषां निष्प्रत्यूहं सिद्धिप्रकारं प्रदर्शयत।

३—अस्, श्वस्, शास्, चकास्, एषां लङि प्रथमपुरुषैकवचने रूपाणि साधयत ।

४—जगे, अधिजगे, वत्स्यति, अत्स्यति, वत्स्यंति, इयष्ठ, दद्रष्ठ, जगन्थ, जगनिथ, एते कथं सिद्ध्यन्ति ।

५—उप्यात्, उच्यात्, उष्यात्, अयात्, अगात्, अध्यगात्, अधाक्षीत्, अवाक्षीत्, एषां कथं सिद्धिः ।

६—व्यथ, व्येञ्, वेञ् एषां लिटि मध्यमपुरुषे रूपाणि प्रदर्शयत ।

१८१० । २ पत्रम् ।

१—आञ्छ, विव्यतुः, जिग्यतुः, आनृजे, जघास्रे, अयाञ्चकार, ऊये, अयाञ्चक्रे एते कथं सिद्ध्यन्ति ।

२—धृक्षीष्ट, आश्लिष्ट, अतिष्यथ, अत्रोढ्वम्, परिषस्वजे, परिसोढा, कल्पयति एतान् साधु साधयत ।

३—अह्लास्त, पर्यस्तोत्, अस्वपत्, एषु विशेषकार्याणि तत्तत्सूत्रोपन्यासपुरस्सरं दर्शयत ।

४—अवेः, अचकाः, सुषुपुपतुः, मास्म भवान् क्षुत, मास्मभवान् भूत एतान् सविस्तरं साधयत ।

५—वस्, वश्, स्रंस् धातूनां लिटि धेटश्विधातोर्लुङि प्रथमपुरुषे विशेषकार्याणि निर्दिशत ।

१८११ । १ पत्रम् ।

१—शेषशैषिकशब्दार्थौ लिख, सौदर्शिनिकी, गोनर्दीयः, पर्वतीयः, पार्वतः, एषां साधनप्रक्रियां च सूत्रलेखपूर्वकं दर्शय ।

२—पूर्ववार्षिकः, पौर्ववार्षिकी, गार्हपत्यः, सौरभम्, वासतेयी, कडङ्करीयः, आश्विजीनः, एतेषां साधुत्वं कुरु ।

३—लोमादिसूत्रं, मादुपधेति, प्रकारे गुणेति, द्वन्द्वं रहस्येति च व्याख्यायताम् तथा कुत्र कुत्र उभयपदवृद्धिः कुत्र कुत्र चोत्तरपदवृद्धिनिषेध इत्यपि लिख ।

४—प्राग्दिशीयानां विभक्तिसञ्ज्ञाफलानि लिखत, सद्यः परुत् इत्यादिसूत्रं व्याख्यायताम् ।

५—नेदीयान्, वर्षीयान्, किन्तमाम्, दोहीयसी, विरजीकरोति, देवता, द्वन्द्वः, दोषाभूतम्, राजसाद्भवति, एतेषां साधुत्वं कुरु ।

१८१२ । १ पत्रम् ।

१—काशिकः, मालाप्रस्थकः, शाल्मलिकीयः काश्यपिनः, नागरकः, एतान् प्रयोगान् सूत्रप्रत्ययार्थोपन्यासपुरस्सरं साधय ।

२—लालामिकः, कौक्कुटिनो भिक्षुः, धन्यः, अर्धप्रस्थिकम्, परमनैष्किकः, एते प्रयोगाः सूत्रोच्चारणपुरस्सरं साधनीयाः ।
३—परम्परीणः समांसमीना; समायां समायां विजायते, उक्षगोयुगम्, अश्ववडवम् । एतेषां साधनाय सूत्रप्रत्ययार्थां अभिधातव्याः ।
४—ज्योत्स्ना, दन्तावलः, वाचाटः, पञ्चमीउक्षः, इह, एतेऽपि तथैव साधनीयाः ।
५—परारिः, मद्राकरोति, निष्कुला करोति, दाडिमम्, देवा अर्जुनतोऽभवन्, अतिग्रहव्यथनक्षेपेष्वकर्त्तरितृतीयायाः, एतान् प्रयोगान्प्रसाध्य सूत्रं व्याख्येयमिदम् ।
६—गतगता, सपत्त्राकरोति मृगम्, परि परि वङ्गेभ्यो वृष्टो देवः, शय्या करोति, देवत्रावन्दे । एतेषां साधनोपयोगिनः सूत्रार्थप्रत्यया वक्तव्याः ।
७—वैनयिकः, कार्मणम्, अविकः, द्विपदिकां व्यवसृजति, एतान् सम्यक् साधय ।

## १८१५ । १ पत्रम्

१—अध्यर्धसहस्रम्, अध्यर्द्धपाद्यम्, ऐक्षुभारिकः, सामयिकम्, सर्वचर्मीणः, एतेषां साधुत्वं सूत्रोपन्यासपुरस्सरं वक्तव्यम् ।
२—विपुणः, उभयेद्युः, अधरात्, बंहिष्ठः, यथायथम्, एते प्रयोगा यथार्थसूत्राणामुपन्यासेन साधनीयाः ।
३—ऐषमस्त्यम्, पैलुवाहकः, वाहुवर्त्तकः कटपलवलीयम्, अपरहैमनः, एते प्रयोगाः सूत्रप्रत्ययार्थप्रदर्शनेन साध्याः ।
४—वाजपेयिकः, शालातुरीयः, हारिद्रविणः, कर्मन्दिनः तापनीयः, एतान्प्रयोगान्साधयितुमर्थप्रत्ययसूत्राणामुपन्यासः कर्त्तव्यः ।
५—तैत्तिडीकम्, वैशखम्, पुरोडाशीयः, काथिकः, मातृभोगीणः । एतेषां साधनायोपयुक्ताः प्रत्ययसूत्रार्थां उपस्थापनीयाः ।

## २ पत्रम् ।

१—बभूव, अभूवन्, गन्ता, हन्ता, जगमिथ, जघनिथ एते सूत्रोपन्यासपुरस्सरं साधनीयाः ।
२—न कस्यमितिसूत्रस्थ नञ उत्तरत्रिसूत्र्यामनुवृत्तिरस्ति नवेति सोपपत्तिकमुच्यताम् ।
३—आस्ताम्, अध्यैयाताम्, आयन्, अधीयन्, एते कथं सिद्ध्यन्ति ।
४—आस, चकास, विद्, जागृ, दरिद्राधातूनां लिटि प्रथमपुरुषे रूपाणि लेख्यानि ।
५—जक्षतुः, जजक्षतुः, विदतुः, विविदतुः । एषां सिद्धिप्रकारो लेखनीयः ।

१८१६ । १ पत्रम् ।

१—माहेयम्, नैशः, प्राह्णेतनम्, राङ्कवायणः एतान् प्रयोगानर्थप्रत्ययसूत्रोपन्यासपूर्वकं प्रसाध्य गर्तोत्तरपदाच्छ इत्यस्योदाहरणे तदन्तविधिनैव सिद्धे उत्तरपदग्रहणस्य फलं च दर्शय ।

२—पन्थकः, अमावास्यः, सैन्धवः, चित्रा, रोहिणः, एतान् प्रयोगान् सूत्रार्थप्रत्ययोपादानपुरस्सरं साधयन्तु ।

३—औपजानुकः, हैमन्तः, मासिकम्, कलापकम्, कौशेयम्, एषु कः प्रत्ययः कोऽर्थः किञ्च प्रवृत्तं सूत्रम् ।

४—वासिष्ठिकः, सौपः, ऐणेयम्, द्रुवयम्, एते प्रयोगाः अर्थप्रत्ययसूत्रोपन्यासेन प्रसाध्याः, ऋतुयज्ञेभ्यश्चेति सूत्रे उभयोपादानप्रयोजनञ्च वक्तव्यम् ।

५—आश्वम्, स्थाविरम्, मौनम्, रामणीयकम्, एतेषां साधनायोपयुक्ताः सूत्रार्थप्रत्यया अभिधेयाः ।

२ पत्रम् ।

१—भूयात्, यूयात्, समेयात्, ग्लेयात्, एतेषां कथं सिद्ध्यन्ति ।

२—गोढा, वोढा, परिसोढा, एते विशेषकार्याणि प्रदर्श्य साधनीयाः ।

३—अक्राक्षुः, अव्राक्षुः, अभाक्षुः, अत्याक्षुः, एते कथं सिद्ध्यन्ति ।

४—भ्रस्ज, ऊर्णुञ, ष्टुञ धातूनां लुङि प्रथमपुरुषे रूपाणि दर्शनीयानि ।

५—एधि, शाधि, चकाधि एते कथं सिद्ध्यन्ति ।

६—सत्यवकाशे संज्ञायाः कार्यकालत्वादित्यादिकारिकाऽवतरणपुरस्सरं व्याख्येया ।

१८१७ । १ पत्रम् ।

१—आतिथ्यम्, देवता, मणिकः, कोपेन लौहितकः, वैनयिकः, एतेषां साधुत्वं सूत्रप्रत्ययार्थानामुपन्यासेन वक्तव्यम् ।

२—द्विगुणाकरोतिक्षेत्रम्, समयाकरोतिकालम्, सपत्राकरोति मृगम्, परिपरिवर्जेभ्यो वृष्टो देवः, शूलाकरोति मांसम् । एषु प्रयोगेषु प्रत्ययस्तदर्थस्तद्विधायकं सूत्रञ्चोपन्यसनीयम् ।

३—बाढः, प्राह्णेतमाम्, करिष्ठः, द्वैधम्, एनबन्यतरस्यामदूरेऽपञ्चम्याः । अत्रोक्तप्रयोगेषु प्रत्ययार्थसूत्राणामुपन्यासेन साधुत्वं बोधयित्वोक्तसूत्रं व्याख्येयम् ।

४—परिमाणान्तस्यासंज्ञाशाणयोः, नातः परस्येति सूत्रे स्पष्टं व्याख्याय अर्धकौडविकं साधय ।

५—कर्मन्दकृशाश्वादिनिः, उपज्ञाते, कृते ग्रन्थे, पदान्तस्यान्यतरस्याम्, चरति, एतानि सूत्राणि व्याख्येयानि, उदाहरणानाञ्चोपन्यासः कार्यः ।

## २ पत्रम् ।

१—अभूवन्, सिषेद्ध, ऊखतुः, अग्लुचत्, श्रेपे, अक्षंस्त एषां साधुत्वं सम्पूर्णसूत्रनिदर्शनपुरस्सरं निरूपय ।

२—खेद, श्चि, स्यन्दू, एतेषां प्रथमपुरुषैकवचने रूपाणि सुसाधय ।

३—अजधातोर्लिटि उत्तमपुरुषद्विवचने वेन्धातोश्च लिटि प्रथमपुरुषैकवचने कति रूपाणि तानि संसाधयत ।

४—कथं तर्हि कमलवनोद्घाटनं कुर्वते ये, प्रविघाटयिता समुत्पतदित्यादिना किमुक्तमिति सुस्पष्टमुपपादयत ।

५—ऊर्णुधातोर्लङि लुङि च प्रथमपुरुषैकवचने रूपाणि प्रदर्श्य अशिषत्, अदर्शत्, अवोचत् एतान् संसाधय ।

## १८१८ । १ पत्रम् ।

१—कटपल्वलीयम्, दाक्षिकन्थीयम्, आग्रहायणिकम्, नैशिकम्, औणम्, एतान् साधय ।

२—कृत्रिमम्, आपमित्यकम्, धन्यः, पद्यः, गार्हपत्यः, एतान् साधय ।

३ } मत्यम्, उरस्यः, सार्वभौमः, प्रास्थिकम्, वैनयिकः । साध्या इमे ।

४—वेध्यः, सांग्रामिकः, कल्पः, आतिथ्यम्, साध्या इमे ।

५—शतसहस्रान्ताच्च निष्कात् । रूपादाहतप्रशंसयोर्यप् । आलजाटचौ बहुभाषिणि, स्वामिन्नैश्वर्ये, तुरिष्ठेमेयस्सु । एतानि सूत्राण्युदाहरणोपन्यासपुरस्सरं व्याख्येयानि ।

## २ पत्रम् ।

१—वदव्रजहलन्तस्याचः, इत्यत्र वदग्रहणस्य अतोहलादेर्लघोरित्यत्र लघोग्रहणस्य उपसर्गात्सुनोतीत्यत्र स्तुग्रहणेनैव सिद्धे परिनिविभ्यः सेवसितेति सूत्रे तद्ग्रहणस्य च प्रयोजनान्युपपाद्यावाचालम्बना विदूर्ययोरित्यस्योदाहरणानि प्रदर्शय ।

२—कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीति सूत्रं व्याख्यायानन्तरस्य विधिर्वा प्रतिषेधो वेति न्यायः प्रवर्त्तते नवेति विशदमुपपाद्यताम् ।

३—जह्रुः; आरुः; श्रेपे, क्राम्यति, चक्षणवहे; आरिथ, अपक्थाः, एतानि सम्पूर्णविशेषसूत्रप्रदर्शनपुरस्सरं साधनीयानि ।

४—अपात्, अपासीत्, अघ्रासीत्. अधासीत्, अधाक्षीत्, अक्राक्षीत्, दद्रष्ठ, एतान्यपि तथा ।

५—अचकमत, अपप्तत्, अदर्शत्, अश्वत्, आदः; अवोचत्, आशिषत्, शेरते, एतेषां साधुत्वप्रकारः प्रदर्शनीयः ।

३—सुडधातुष्ठिवुष्वस्कतीनां सत्वप्रतिषेधः, इत्यत्र सुड्धातुग्रहणस्य प्रयोजनं प्रदर्श्यैतद्वार्तिकोदाहरणानामन्यथासिद्धिरस्ति नवेति सुस्पष्टं लिख ।

## १८२० । १ पत्रम् ।

१—नान्दीपुरकः, सुखतीयम्, हैमनम्, नैशः, पौरोडाशिकः, शारीरकीयः, कृशाश्विनः, पिष्टमयम्, द्रव्यम्, कांस्यम्, एतेषां ससूत्रं साधुत्वं यथासम्भवं रूपभेदाः, दर्शितार्थभेदश्च दर्शनीयः ।

२—विभाषा विवधात्, कर्मेर्मन्त्रिस्यम्, नाभि नभञ्च, वतोरिड्वा, विराग विरंगञ्च, तेन निर्वृत्तम्, प्रकृष्टे ठञ्, अर्हतो नुम् च एतानि सोदाहरणीयानि ।

३—नासिका, नि, फेन, कं, शम्, उपेन्द्रदत्त एतेषां दर्शितरूपभेदाः ससूत्रं दर्शनीयाः ।

४—परुत्, परारि, इत्थम्, उपरि, ज्येष्ठः, ईश्वराधीनः, पितृदेवत्यम्, एते किमर्थभाजः, कथं साधवश्च ।

५—विप्रत्रा करोति, शम्बा करोति, सत्या करोति मद्रा करोति, एकैकया आहुत्या जुहोति । एते दर्शितार्थदर्शनपूर्वकं साधनीयाः ।

## २ पत्रम् ।

१—यासुटो ङित्करणस्य प्रयोजननिरूपणपुरस्सरमेतानि रूपाणि साध्यन्ताम्, एधांचकृढ्वे, ऊखतुः, आनृजे, विव्ययिथ, इति ।

२—सञ्ज्ञायाः कार्यकालत्वादित्यादयः पञ्चकारिकाव्याख्यायन्ताम् । वस्तुत इत्यादिनात्र माधवमते सूचितामरुचिं च प्रदर्शयत ।

३—विरमति, यक्ष्यति, कल्प्तासि, अदित, एतेषां विशेषशास्त्रनिर्देशपुरस्सरं सिद्धिप्रकारः प्रदर्शनीयः ।

४—आरिथ, ऊवतुः, अक्शासीत्, सुषुषुपतुः, एतानि संसाध्य दरिद्रा दुर्गतावित्यस्य लिटि कानि कानि रूपाणि प्रदर्शितानि ग्रन्थकृता, तेषु कतमञ्च न्याय्यमित्यपि सप्रमाणमुपपाद्यताम् ।

५—स्वञ्जते, परिसोढा, प्रज्वालयति, एतेषां साधुत्वमसाधुत्वं वेति सप्रमाणं निरूप्यताम् ।

## १८२१ । १ पत्रम् ।

१—ऐतावकः, आरण्यकः, परुलम्, वासिष्ठिकम्, शृङ्खलकः, आथर्वणः; नैयग्रोधम् । एते ससूत्रं साधनीयाः ।

२—दशैकादशिकः; कौक्कुटिकः, वश्यः, बालेयाः, गव्यः षष्टिकः । एतेषां साधनं प्रदर्श्य ग्रन्थनिर्दिष्टा अर्थाः प्रदर्शनीयाः ।

३—होताभ्यइछः, आगवीनः, अधिकम्, सपूर्वाच, अधुना; पूगाञ्ञ्योऽग्रामणीपूर्वात्, एतानि सोदाहरणानि व्याख्येयानि ।

४—केश, तुन्द, कर्ण, हृदय, एक, एते ग्रन्थनिर्दिष्टयावत्प्रत्ययान्ताः प्रदर्शनीयाः ।

५—देवदत्त, शेवलदत्त, व्याघ्राजिन, नव, प्र, एतेषां रूपभेदः प्रदर्शनीयः।
६—एकैकम्, परस्परम्, द्वन्द्वम्, एतेषां साधनं प्रदर्श्य "दलद्वये टावभावः" इति कारिका सोदाहरणं व्याख्येया।

१९२१। २ पत्रम्।

१—भवेयुः, ऐधिढ्वम्, देधे, निषिषेध, एते प्रयोगाः साधु साध्यन्ताम्।
२—आञ्छ, आसीत्, अक्ष्णोति, अधाम्, एतेषां सिद्धिप्रकारः प्रदर्शनीयः।
३—वेञ् तन्तुसंताने, टुओश्वि गतिवृद्ध्योः, दरिद्रा दुर्गतौ, चक्षिङ् व्यक्तायां वाचि, एतेषां लिटि प्रथमैकवचने पाक्षिकरूपप्रदर्शनपुरस्सरं रूपाणि साध्यन्ताम्।
४—अचकाः, अजागरीत्, अदित, एतानि विशेषशास्त्रप्रदर्शनपुरस्सरं साधनीयानि।
५—तातङो ङित्त्वादन्त्यादेशत्वं कस्मान्नेति सप्रमाणं निरूप्यताम्।

१९२२। १ पत्रम्।

१—देवदत्तमयम्, पौरवीयः, सामधेनी, तालम्, व्रीहिमयः, स्वागतिकः, दाधिकम्, आकरिकः, एते सूत्रार्थभेदप्रदर्शनपुरस्सरं साधनीयाः।
२—मूल्याः, चारकीणम्, यशस्यः, द्वैसमिकः, चातुर्मासी, वेध्यः, कापेयम्, एतेषां सप्रमाणं साधनप्रकारः प्रदर्शनीयः।
३—वि, अव, नि, सिकता, एतेषां रूपभेदं सप्रमाणमुपदर्श्य रूप्यः, ऊर्णायुः दामिनी, एते ससूत्रं साधनीयाः।
४—रोपधेतोः प्राचाम्, असाम्प्रतिके, अवयवादृतोः, पत्रपूर्वादञ्, अनुदात्तादेरञ्, नातः परस्य एतानि सोदाहरणीयानि।
५—अजाकृपाणीयः, क्षौद्रक्यः, श्रौमत्यः, द्विशः, बहुत्रा, जीवतो मनः, समया करोति, एकैकयाहुत्या, द्वन्द्वम्, एतेऽर्थप्रदर्शनपूर्वकं सप्रमाणं व्युत्पाद्याः।

१९२२। २ पत्रम्।

१—भवेयुः, निपिषिधतुः, उवोख, विव्यतुः, त्रेपे, एतेषां सिद्धि प्रकारः प्रदर्शनीयः।
२—पणाय्यति, अतायि, उवोष, कल्पिष्यते, एतानि कथं सिद्ध्यन्ति।
३—क्रियात्, आरिथ, दुद्रव, बीभत्सते, एतानि विशेषशास्त्रनिर्देशपुरस्सरं साध्यन्ताम्।
४—सृगतौ, टुओश्वि गतिवृद्ध्योः, चक्षिङ् व्यक्तायां वाचि, ष्टुञ् स्तुतौ एतेषां लुङि प्रथमैकवचने कीदृशं रूपम्।
५—एधधातोर्लुङि थ्वमि रूपभेदे किं मानम्, कानि च तानीति सुस्पष्टमुपपाद्यताम्।
६—अतो येय इति सूत्रे सार्वधातुकपदानुवृत्तेः फलं प्रदर्श्य युयादित्यत्र उतो वृद्धिरिति विहितवृद्ध्यप्रवृत्तौ कीदृशं व्याख्यानप्रमाणं किञ्च तत्र मूलमिति स्फुटमुपवर्ण्यताम्। ग्रन्थानुपूर्वीलेखे नाङ्कलाभो भविष्यति।

## १८२३ । १ पत्रम् ।

१—भोजकटीयः, वैदिकी, स्वकीयम्, वाशिष्टिकः द्वुवयम्, एतेऽर्थसूत्रनिर्देशेन व्युत्पादनीयाः ।

२—कृत्रिमम्, त्यागिमम्, पादविकः, ऐकान्यिकः, आङ्गः, न्याय्यम् वत्सीयः, अजथ्या, औपानह्यम्, एते साधु व्युत्पादनीयाः ।

३—द्विकंसम्, सार्वभौमः, ऐक्षुभारिकः, पञ्चकः, द्विसमीनः, चातुर्वैद्यः, मौनम्, गौष्ठीनः, बहुतिथः, शृङ्खलकः एते सूत्रदर्शनेन व्युत्पाद्याः ।

४—मलीमसः, राधकः, कुटीरः, बहुतरकम, अविकः, आतिथ्यम्, चारित्राऽतिगृह्यते, राजसात्सम्पद्यते, एते स्वसाधकानि सूत्राणि अपेक्षन्ते ।

५—अव, नि, सिकता, एतेषां रूपंभेदं प्रदर्श्य, मूले मूले स्थूलः, सर्पं २ बुद्ध्यस्व, अन्योऽन्यं विप्रा नमन्ति, प्रियाप्रियेण ददाति, यथायथं ज्ञाता, एतेषां द्वित्वविधायकवचनानि अर्थभेदाश्च दर्शनीयानि ।

## १८२४ । १ पत्रम् ।

१—नैषादकर्षुकः, दारुकच्छकः, कृकणीयम्, पन्थकः, गाम्भीर्यम्, नैयग्रोधः, भस्त्रिका, एते सूत्रप्रदर्शनेन साधनीयाः ।

२—धौरेयः, अग्रयः, पाथेयम्, सतीर्थ्यः, द्विशतिकीनम्, प्रास्थिकः, प्रावृषेण्यम्, एतेऽर्थप्रदर्शनेन ससूत्रं व्युत्पाद्याः ।

३—श्रोत्रम्, यथामुखीनः, परम्परीणः, पथिकः, पार्श्वकः, पुष्करिणी, अवस्तात्, एते साधु साधनीयाः ।

४—हिरकुत, डपिलः, कहिकः, औपयिकः, द्विशः उच्चक्षूकरोति, एतेषां ससूत्रं व्युत्पादनं विधेयम् ।

५—षष्ठ्या व्याश्रये, एकं बहुव्रीहिवत्, वर्णे चानित्ये, समासाच्च तद्विषयात्, एतेषामुदाहरणानि निरूपणीयानि ।

## १८२४ । २ पत्रम् ।

१—ईजाञ्चक्रे, आन्छ, विवेथ, अतिष्ठत अचीकमत ऐधिष्ट, एतेषां सिद्धिप्रकारः कः ।

२—वेञ्, व्येञ्, आस्, लभ, देङ्, एतेषां लिटि प्रथमपुरुषैकवचने कीदृशं रूपं कथञ्च तत्सिद्धिः ।

३—सस्वरिव, दुद्रुव, इत्यनयोरिड्भावाभावौ कथम् ? ।

४—रुच, घेट्, ह्वेञ्, देङ्, दृश्, एतेषां लुङि प्रथमपुरुषबहुवचने रूपाणि साध्यन्ताम् ।

५—एकाच् उपदेशेऽनुदात्तादिति सूत्रे एकाज्ग्रहणयोः प्रयोजनमुपपाद्य साध्यन्तामधोलिखितानि रूपाणि—चकमे, चक्षंसे, सर्सा, असोढ, अशिषत् ।

---

